# .. Gita - sandhi-vigraha and anvaya ..

## ॥ गीता सन्धिविग्रह अन्वय ॥

अथ प्रथमोऽध्यायः । अर्जुनविषादयोगः ।
अथ प्रथमः अध्यायः । अर्जुन-विषाद योगः ।

धृतराष्ट्र उवाच ।
धृतराष्ट्रः उवाच ।

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १-१ ॥

धर्म-क्षेत्रे कुरु-क्षेत्रे समवेताः युयुत्सवः ।
मामकाः पाण्डवाः च एव किम् अकुर्वत सञ्जय ॥ १-१ ॥

हे सञ्जय! धर्म-क्षेत्रे, कुरु-क्षेत्रे, युयुत्सवः समवेताः
मामकाः पाण्डवाः च एव किम् अकुर्वत ?

सञ्जय उवाच ।
सञ्जयः उवाच ।

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ १-२ ॥

दृष्ट्वा तु पाण्डव-अनीकम् व्यूढम् दुर्योधनः तदा ।
आचार्यम् उपसङ्गम्य राजा वचनम् अब्रवीत् ॥ १-२ ॥

तदा तु पाण्डव-अनीकम् व्यूढम् दृष्ट्वा, राजा दुर्योधनः
आचार्यम् उपसङ्गम्य, ( इदं) वचनम् अब्रवीत् ॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ १-३ ॥

पश्य एताम् पाण्डु-पुत्राणाम् आचार्य महतीम् चमूम् ।

व्यूढाम् द्रुपद-पुत्रेण तव शिष्येण धीमता ॥१-३॥

हे आचार्य! तव धीमता शिष्येण, द्रुपद-पुत्रेण व्यूढाम्
पाण्डु-पुत्राणाम् एताम् महतीम् चमूम् पश्य ।

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥१-४॥

अत्र शूराः महा-इषु-आसाः भीम-अर्जुन-समाः युधि ।
युयुधानः विराटः च द्रुपदः च महारथः ॥१-४॥

अत्र, भीम-अर्जुन-समाः युधि शूराः महा-इषु-आसाः,
महारथः युयुधानः, विराटः च द्रुपदः च ।

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥१-५॥

धृष्टकेतुः चेकितानः काशिराजः च वीर्यवान् ।
पुरुजित् कुन्तिभोजः च शैब्यः च नर-पुङ्गवः ॥१-५॥

धृष्टकेतुः, चेकितानः च, वीर्यवान् काशिराजः च,
पुरुजित् कुन्तिभोजः च, नर-पुङ्गवः शैब्यः च ।

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥१-६॥

युधामन्युः च विक्रान्तः उत्तमौजाः च वीर्यवान् ।
सौभद्रः द्रौपदेयाः च सर्वे एव महारथाः ॥१-६॥

विक्रान्तः युधामन्युः च, वीर्यवान् उत्तमौजाः
सौभद्रः च, द्रौपदेयाः च, सर्वे महारथाः एव ।

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥१-७॥

अस्माकम् तु विशिष्टाः ये तान् निबोध द्विज-उत्तम ।

नायकाः मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥ १-७ ॥

हे द्विज-उत्तम! अस्माकम् तु ये विशिष्टाः, मम सैन्यस्य
नायकाः, तान् निबोध । तान् संज्ञार्थम् ते ब्रवीमि ।

भवान्भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिर्जयद्रथः ॥ १-८ ॥

भवान् भीष्मः च कर्णः च कृपः च समितिञ्जयः ।
अश्वत्थामा विकर्णः च सौमदत्तिः तथा एव च ॥ १-८ ॥

भवान् भीष्मः च, कर्णः च, समितिञ्जयः कृपः च,
अश्वत्थामा विकर्णः च, तथा एव च सौमदत्तिः ।

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ १-९ ॥

अन्ये च बहवः शूराः मदर्थे त्यक्त-जीविताः ।
नाना-शस्त्र-प्रहरणाः सर्वे युद्ध-विशारदाः ॥ १-९ ॥

अन्ये च बहवः शूराः, सर्वे मदर्थे त्यक्त-जीविताः,
नाना-शस्त्र-प्रहरणाः युद्ध-विशारदाः [ सन्ति] ।

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १-१० ॥

अपर्याप्तम् तत् अस्माकम् बलम् भीष्म-अभिरक्षितम् ।
पर्याप्तम् तु इदम् एतेषाम् बलम् भीम-अभिरक्षितम् ॥ १-१० ॥

अस्माकम् भीष्म-अभिरक्षितम् तत् बलम् अपर्याप्तम्,
एतेषाम् तु भीम-अभिरक्षितम् इदम् बलम् पर्याप्तम् ( अस्ति) ।
अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ १-११ ॥

अयनेषु च सर्वेषु यथा-भागम् अवस्थिताः ।
भीष्मम् एव अभिरक्षन्तु भवन्तः सर्वे एव हि ॥ १-११ ॥

भवन्तः सर्वे एव हि सर्वेषु अयनेषु च यथा-भागम् अवस्थिताः
भीष्मम् एव अभिरक्षन्तु ।

तस्य सञ्जनयन्हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १-१२ ॥

तस्य सञ्जनयन् हर्षम् कुरु-वृद्धः पितामहः ।
सिंहनादम् विनद्य उच्चैः शङ्खम् दध्मौ प्रतापवान् ॥ १-१२ ॥

तस्य हर्षम् सञ्जनयन् प्रतापवान् कुरु-वृद्धः
पितामहः, उच्चैः सिंहनादम् विनद्य शङ्खम् दध्मौ ।

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १-१३ ॥

ततः शङ्खाः च भेर्यः च पणव-आनक-गोमुखाः ।
सहसा एव अभ्यहन्यन्त सः शब्दः तुमुलः अभवत् ॥ १-१३ ॥

ततः शङ्खाः च भेर्यः च पणव-आनक-गोमुखाः
सहसा एव अभ्यहन्यन्त । सः शब्दः तुमुलः अभवत् ।

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १-१४ ॥

ततः श्वेतैः हयैः युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवः च एव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १-१४ ॥

ततः श्वेतैः हयैः युक्ते महति स्यन्दने स्थितौ माधवः
पाण्डवः च एव दिव्यौ शङ्खौ प्रदध्मतुः ।

पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १-१५ ॥

पाञ्चजन्यम् हृषीकेशः देवदत्तम् धनञ्जयः ।
पौण्ड्रम् दध्मौ महा-शङ्खम् भीम-कर्मा वृक-उदरः ॥ १-१५ ॥

हृषीकेशः पाञ्चजन्यम्, धनञ्जयः देवदत्तम् ,
भीम-कर्मा वृक-उदरः पौण्ड्रम् महा-शङ्खम् दध्मौ ।

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥१-१६॥

अनन्तविजयम् राजा कुन्ती-पुत्रः युधिष्ठिरः ।
नकुलः सहदेवः च सुघोष-मणि-पुष्पकौ ॥१-१६॥

कुन्ती-पुत्रः राजा युधिष्ठिरः अनन्तविजयम्, नकुलः सहदेवः च
सुघोष-मणि-पुष्पकौ ।

काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१-१७॥

काश्यः च परम-इषु-आसः शिखण्डी च महारथः ।
धृष्टद्युम्नः विराटः च सात्यकिः च अपराजितः ॥१-१७॥

परम-इषु-आसः काश्यः च, महारथः शिखण्डी च
धृष्टद्युम्नः विराटः च, अपराजितः सात्यकिः च ।

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥१-१८॥

द्रुपदः द्रौपदेयाः च सर्वशः पृथिवी-पते ।
सौभद्रः च महा-बाहुः शङ्खान् दध्मुः पृथक् पृथक् ॥१-१८॥

द्रुपदः द्रौपदेयाः च, महा-बाहुः सौभद्रः च,
हे पृथिवी-पते! पृथक् पृथक् सर्वशः शङ्खान् दध्मुः ।

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥१-१९॥

सः घोषः धार्तराष्ट्राणाम् हृदयानि व्यदारयत् ।
नभः च पृथिवीम् च एव तुमुलः अभ्यनुनादयन् ॥१-१९॥

सः तुमुलः घोषः नभः च पृथिवीम् च एव व्यनुनादयन्,
धार्त्रराष्ट्राणाम् हृदयानि व्यदारयत् ।

अथ व्यवस्थितान्दृष्ट्वा धार्त्रराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥१-२०॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ।

अथ व्यवस्थितान् दृष्ट्वा धार्त्रराष्ट्रान् कपि-ध्वजः ।
प्रवृत्ते शस्त्र-सम्पाते धनुः उद्यम्य पाण्डवः ॥१-२०॥
हृषीकेशम् तदा वाक्यम् इदम् आह महीपते ।

अथ कपि-ध्वजः पाण्डवः धार्त्रराष्ट्रान् व्यवस्थितान् दृष्ट्वा,
शस्त्र-सम्पाते प्रवृत्ते ( सति) धनुः उद्यम्य
हे महीपते! तदा हृषीकेशम् इदम् वाक्यम् आह ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥१-२१॥

सेनयोः उभयोः मध्ये रथम् स्थापय मे अच्युत ॥१-२१॥

हे अच्युत! उभयोः सेनयोः मध्ये मे रथम् स्थापय ।

यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥१-२२॥ ॥

यावत् एतान् निरीक्षे अहम् योद्धु-कामान् अवस्थितान् ।
कैः मया सह योद्धव्यम् अस्मिन् रण-समुद्यमे ॥१-२२॥

यावत् अहम् योद्धु-कामान् अवस्थितान् एतान् निरीक्षे;
अस्मिन् रण-समुद्यमे मया कैः सह योद्धव्यम् ?

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥१-२३॥ ॥

योत्स्यमानान् अवेक्षे अहम् ये एते अत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेः युद्धे प्रिय-चिकीर्षवः ॥१-२३॥

दुर्बुद्धेः धार्तराष्ट्रस्य युद्धे प्रिय-चिकीर्षवः
ये एते अत्र समागताः योत्स्यमानान् अहम् अवेक्षे ।

सञ्जय उवाच ।
सञ्जयः उवाच ।

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥१-२४॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥१-२५॥

एवम् उक्तः हृषीकेशः गुडाकेशेन भारत ।
सेनयोः उभयोः मध्ये स्थापयित्वा रथ-उत्तमम् ॥१-२४॥
भीष्म-द्रोण-प्रमुखतः सर्वेषाम् च मही-क्षिताम् ।
उवाच पार्थ पश्य एतान् समवेतान् कुरून् इति ॥१-२५॥

हे भारत! एवम् गुडाकेशेन उक्तः हृषीकेशः, उभयोः सेनयोः मध्ये,
भीष्म-द्रोण-प्रमुखतः सर्वेषाम् च मही-क्षिताम्
रथ-उत्तमम् स्थापयित्वा, हे ' पार्थ! एतान् समवेतान् कुरून्
पश्य' , इति उवाच ।

तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥१-२६॥
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ।
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥१-२७॥
कृपया परयाविष्टो विषीदन्निदमब्रवीत् ।

तत्र अपश्यत् स्थितान् पार्थः पितॄन् अथ पितामहान् ।
आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखीन् तथा ॥१-२६॥
श्वशुरान् सुहृदः च एव सेनयोः उभयोः अपि ।
तान् समीक्ष्य सः कौन्तेयः सर्वान् बन्धून् अवस्थितान् ॥१-२७॥
कृपया परयाविष्टः विषीदन् इदम् अब्रवीत् ।

अथ पार्थः उभयोः सेनयोः अपि, तत्र स्थितान् पितॄन्,
पितामहान्, आचार्यान्, मातुलान्, भ्रातॄन्, पुत्रान्,
पौत्रान् तथा सखीन्, श्वशुरान् सुहृदः, च एव अपश्यत् सः कौन्तेयः ।
तान् सर्वान् बन्धून् अवस्थितान् समीक्ष्य परया कृपया आविष्टः,
विषीदन् इदम् अब्रवीत् ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥१-२८॥
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥१-२९॥

दृष्ट्वा इमम् स्वजनम् कृष्ण युयुत्सुम् समुपस्थितम् ॥१-२८॥
सीदन्ति मम गात्राणि मुखम् च परिशुष्यति ।
वेपथुः च शरीरे मे रोम-हर्षः च जायते ॥१-२९॥

हे कृष्ण! इमम् स्वजनम् युयुत्सुम् समुपस्थितम् दृष्ट्वा
मम गात्राणि सीदन्ति मुखम् च परिशुष्यति, मे शरीरे
वेपथुः च रोम-हर्षः च जायते ।

गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥१-३०॥

गाण्डीवम् स्रंसते हस्तात् त्वक् च एव परिदह्यते ।
न च शक्नोमि अवस्थातुम् भ्रमति इव च मे मनः ॥१-३०॥

हस्तात् गाण्डीवम् स्रंसते, त्वक् च एव परिदह्यते,
अवस्थातुम् च न शक्नोमि मे मनः च भ्रमति इव ।
निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥१-३१॥

निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयः अनुपश्यामि हत्वा स्वजनम् आहवे ॥१-३१॥

हे केशव! निमित्तानि विपरीतानि च पश्यामि । आहवे च स्वजनम् हत्वा श्रेयः न अनुपश्यामि ।

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ १-३२ ॥

न काङ्क्षे विजयम् कृष्ण न च राज्यम् सुखानि च ।
किम् नः राज्येन गोविन्द किम् भोगैः जीवितेन वा ॥ १-३२ ॥

हे कृष्ण! विजयम् न , राज्यम् च सुखानि च न ( काङ्क्षे) ।
हे गोविन्द! नः राज्येन किम् भोगैः जीवितेन वा किम् ?

येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ १-३३ ॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ॥ १-३४ ॥

येषाम् अर्थे काङ्क्षितम् नः राज्यम् भोगाः सुखानि च ।
ते इमे अवस्थिताः युद्धे प्राणान् त्यक्त्वा धनानि च ॥ १-३३ ॥
आचार्याः पितरः पुत्राः तथा एव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनः तथा ॥ १-३४ ॥

येषाम् अर्थे नः राज्यम् काङ्क्षितम्, भोगाः सुखानि च; ते इमे आचार्याः पितरः पुत्राः, तथा एव च पितामहाः, मातुलाः, श्वशुराः, पौत्राः, श्यालाः, तथा सम्बन्धिनः प्राणान् धनानि च त्यक्त्वा, युद्धे अवस्थिताः ।

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ १-३५ ॥

एतान् न हन्तुम् इच्छामि घ्नतः अपि मधुसूदन ।
अपि त्रैलोक्य-राज्यस्य हेतोः किम् नु महीकृते ॥ १-३५ ॥

हे मधुसूदन! ( मां) घ्नतः अपि एतान्, त्रैलोक्य-राज्यस्य हेतोः अपि न हन्तुम् इच्छामि, किम् नु महीकृते ?

निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ १-३६ ॥

निहत्य धार्तराष्ट्रान् नः का प्रीतिः स्यात् जनार्दन ।
पापम् एव आश्रयेत् अस्मान् हत्वा एतान् आततायिनः ॥ १-३६ ॥

हे जनार्दन! एतान् धार्तराष्ट्रान् निहत्य नः का प्रीतिः
स्यात् ? आततायिनः हत्वा अस्मान् पापम् एव आश्रयेत् ।

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ १-३७ ॥

तस्मात् न अर्हाः वयम् हन्तुम् धार्तराष्ट्रान् स्वबान्धवान् ।
स्वजनम् हि कथम् हत्वा सुखिनः स्याम माधव ॥ १-३७ ॥

हे माधव! तस्मात् स्वबान्धवान् धार्तराष्ट्रान्
हन्तुम् वयम् न अर्हाः । हि स्वजनम् हत्वा ( वयम्) कथम्
सुखिनः स्याम ?

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ १-३८ ॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ १-३९ ॥

यदि अपि एते न पश्यन्ति लोभ-उपहत-चेतसः ।
कुल-क्षय-कृतम् दोषम् मित्र-द्रोहे च पातकम् ॥ १-३८ ॥
कथम् न ज्ञेयम् अस्माभिः पापात् अस्मान् निवर्तितुम् ।
कुल-क्षय-कृतम् दोषम् प्रपश्यद्भिः जनार्दन ॥ १-३९ ॥

यदि अपि एते लोभ-उपहत-चेतसः कुल-क्षय-कृतम् दोषम्,
मित्र-द्रोहे च पातकम् न पश्यन्ति; हे जनार्दन! कुल-क्षय-कृतम्
दोषम् प्रपश्यद्भिः अस्माभिः अस्मात् पापात् निवर्तितुम् कथम् न ज्ञेयम् ?

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ १-४० ॥

कुल-क्षये प्रणश्यन्ति कुल-धर्माः सनातनाः ।
धर्मे नष्टे कुलम् कृत्स्नम् अधर्मः अभिभवति उत ॥१-४०॥

कुल-क्षये सनातनाः कुल-धर्माः प्रणश्यन्ति, उत धर्मे नष्टे
अधर्मः कृत्स्नम् कुलम् अभिभवति ।

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥१-४१॥

अधर्म-अभिभवात् कृष्ण प्रदुष्यन्ति कुल-स्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्ण-सङ्करः ॥१-४१॥

हे कृष्ण! अधर्म-अभिभवात् कुल-स्त्रियः प्रदुष्यन्ति ।
हे वार्ष्णेय! स्त्रीषु दुष्टासु वर्ण-सङ्करः जायते ।

सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥१-४२॥

सङ्करः नरकाय एव कुल-घ्नानाम् कुलस्य च ।
पतन्ति पितरः हि एषाम् लुप्त-पिण्ड-उदक-क्रियाः ॥१-४२॥

सङ्करः कुल-घ्नानाम् कुलस्य च नरकाय एव ( भवति) ;
हि एषाम् पितरः लुप्त-पिण्ड-उदक-क्रियाः ( सन्तः) पतन्ति ।

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥१-४३॥

दोषैः एतैः कुल-घ्नानाम् वर्ण-सङ्कर-कारकैः ।
उत्साद्यन्ते जाति-धर्माः कुल-धर्माः च शाश्वताः ॥१-४३॥

कुल-घ्नानाम् एतैः वर्ण-सङ्कर-कारकैः दोषैः शाश्वताः
जाति-धर्माः कुल-धर्माः च उत्साद्यन्ते ।

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥१-४४॥

उत्सन्न-कुल-धर्माणाम् मनुष्याणाम् जनार्दन ।
नरके अनियतम् वासः भवति इति अनुशुश्रुम ॥१-४४॥

हे जनार्दन! उत्सन्न-कुल-धर्माणाम् मनुष्याणाम्
नरके नियतम् वासः भवति, इति अनुशुश्रुम ।

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥१-४५॥

अहो बत महत् पापम् कर्तुम् व्यवसिता वयम् ।
यत् राज्य-सुख-लोभेन हन्तुम् स्वजनम् उद्यताः ॥१-४५॥

अहो! बत, महत् पापम् कर्तुम् वयम् व्यवसिताः यत्
राज्य-सुख-लोभेन स्वजनम् हन्तुम् उद्यताः ।

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥१-४६॥

यदि माम् अप्रतीकारम् अशस्त्रम् शस्त्र-पाणयः ।
धार्तराष्ट्राः रणे हन्युः तत् मे क्षेमतरम् भवेत् ॥१-४६॥

यदि शस्त्र-पाणयः धार्तराष्ट्राः अशस्त्रम् अप्रतीकारम्
माम् रणे हन्युः तत् मे क्षेमतरम् भवेत् ।

सञ्जय उवाच ।
सञ्जयः उवाच ।

एवमुक्त्वार्जुनः सङ्ख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥१-४७॥

एवम् उक्त्वा अर्जुनः सङ्ख्ये रथ-उपस्थे उपाविशत् ।
विसृज्य सशरम् चापं शोक-संविग्न-मानसः ॥१-४७॥

सङ्ख्ये एवम् उक्त्वा, शोक-संविग्न-मानसः अर्जुनः
सशरम् चापं विसृज्य, रथ-उपस्थे उपाविशत् ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
अर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥१॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायां योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
अर्जुन-विषाद-योगः नाम प्रथमः अध्यायः ॥१॥

---

अथ द्वितीयोऽध्यायः । साङ्ख्ययोगः ।
अथ द्वितीयः अध्यायः । साङ्ख्य-योगः ।

सञ्जय उवाच ।
सञ्जयः उवाच ।

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ २-१॥

तम् तथा कृपया आविष्टम् अश्रु-पूर्ण-आकुल-ईक्षणम् ।
विषीदन्तम् इदम् वाक्यम् उवाच मधुसूदनः ॥ २-१॥

तथा कृपया आविष्टम् अश्रु-पूर्ण-आकुल-ईक्षणम्
विषीदन्तम् तम् मधुसूदनः इदम् वाक्यम् उवाच ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २-२॥

कुतः त्वा कश्मलम् इदम् विषमे समुपस्थितम् ।
अनार्य-जुष्टम् अस्वर्ग्यम् अकीर्तिकरम् अर्जुन ॥ २-२॥

हे अर्जुन! अनार्य-जुष्टम् अस्वर्ग्यम् अकीर्तिकरम्
इदम् कश्मलम् विषमे त्वा कुतः समुपस्थितम् ?

क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।

क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ २-३॥

क्लैब्यम् मा स्म गमः पार्थ न एतत् त्वयि उपपद्यते ।
क्षुद्रम् हृदय-दौर्बल्यम् त्यक्त्वा उत्तिष्ठ परन्तप ॥ २-३॥

हे पार्थ! क्लैब्यम् मा स्म गमः । एतत् त्वयि न उपपद्यते ।
हे परन्तप! क्षुद्रम् हृदय-दौर्बल्यम् त्यक्त्वा उत्तिष्ठ ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ २-४॥

कथम् भीष्मम् अहम् सङ्ख्ये द्रोणम् च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजा-अर्हौ अरि-सूदन ॥ २-४॥

हे मधुसूदन! अहम् भीष्मम् द्रोणम् च सङ्ख्ये इषुभिः कथम्
प्रतियोत्स्यामि? अरि-सूदन! ( एतौ) पूजा-अर्हौ ।

गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ २-५॥

गुरून् अहत्वा हि महानुभावान्
श्रेयः भोक्तुम् भैक्ष्यम् अपि इह लोके ।
हत्वा अर्थ-कामान् तु गुरून् इह एव
भुञ्जीय भोगान् रुधिर-प्रदिग्धान् ॥ २-५॥

हि महानुभावान् गुरून् अहत्वा, इह लोके भैक्ष्यम् भोक्तुम्
अपि श्रेयः । गुरून् हत्वा तु इह एव रुधिर-प्रदिग्धान्
अर्थ-कामान् भोगान् भुञ्जीय ।

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।

यानेव हत्वा न जिजीविषाम-
        स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ २-६ ॥

न च एतत् विद्मः कतरत् नः गरीयः
        यत् वा जयेम यदि वा नः जयेयुः ।
यान् एव हत्वा न जिजीविषामः
        ते अवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ २-६ ॥

नः कतरत् गरीयः? यत् वा ( वयं) जयेम, यदि वा ( ते)
नः जयेयुः, एतत् च न विद्मः । यान् हत्वा न जिजीविषामः,
ते एव धार्तराष्ट्राः प्रमुखे अवस्थिताः ।

कार्पण्यदोषोपहतस्वभावः
        पृच्छामि त्वां धर्मसम्मूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
        शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ २-७ ॥

कार्पण्य-दोष-उपहत-स्वभावः
        पृच्छामि त्वाम् धर्म-सम्मूढ-चेताः ।
यत् श्रेयः स्यात् निश्चितम् ब्रूहि तत् मे
        शिष्यः ते अहम् शाधि माम् त्वाम् प्रपन्नम् ॥ २-७ ॥

कार्पण्य-दोष-उपहत-स्वभावः धर्म-सम्मूढ-चेताः ( अहं)
त्वाम् पृच्छामि । यत् निश्चितम् श्रेयः स्यात्, तत् मे ब्रूहि ।
अहम् ते शिष्यः । त्वाम् प्रपन्नम् माम् शाधि ।

न हि प्रपश्यामि ममापनुद्याद्
        यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
        राज्यं सुराणामपि चाधिपत्यम् ॥ २-८ ॥

न हि प्रपश्यामि मम अपनुद्यात्
        यत् शोकम् उच्छोषणम् इन्द्रियाणाम् ।
अवाप्य भूमौ असपत्नम् ऋद्धम्
        राज्यम् सुराणाम् अपि च आधिपत्यम् ॥ २-८ ॥

हि भूमौ असपत्नम् ऋद्धम् राज्यम् अवाप्य , सुराणाम् च अपि आधिपत्यम्, यत् मम इन्द्रियाणाम् उच्छोषणम् शोकम् अपनुद्यात् न प्रपश्यामि ।

सञ्जय उवाच ।
सञ्जयः उवाच ।

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ २-९ ॥

एवम् उक्त्वा हृषीकेशम् गुडाकेशः परन्तपः ।
न योत्स्ये इति गोविन्दम् उक्त्वा तूष्णीम् बभूव ह ॥ २-९ ॥

परन्तपः गुडाकेशः हृषीकेशम् एवम् उक्त्वा ' न योत्स्ये' इति गोविन्दम् उक्त्वा तूष्णीम् बभूव ह ।

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ २-१० ॥

तम् उवाच हृषीकेशः प्रहसन् इव भारत ।
सेनयोः उभयोः मध्ये विषीदन्तम् इदम् वचः ॥ २-१० ॥

हे भारत! उभयोः सेनयोः मध्ये विषीदन्तम् ( अर्जुनं) तम् हृषीकेशः प्रहसन् इव इदम् वचः उवाच ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ २-११ ॥

अशोच्यान् अन्वशोचः त्वम् प्रज्ञा-वादा् च भाषसे ।
गतासून् अगतासून् च न अनुशोचन्ति पण्डिताः ॥ २-११ ॥

त्वम् अशोच्यान् अन्वशोचः । प्रज्ञा-वादान् च भाषसे ।
पण्डिताः गतासून् अगतासून् च न अनुशोचन्ति ।

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥ २-१२॥

न तु एव अहम् जातु न आसम् न त्वम् न इमे जनाधिपाः ।
न च एव न भविष्यामः सर्वे वयम् अतः परम् ॥ २-१२॥

अहम् जातु न आसम् ( इति) न तु एव, त्वम् ( जातु न आसीः इति) न,
इमे जनाधिपाः ( जातु न आसन् इति) न, ।
अतः परम् च वयम् सर्वे न भविष्यामः ( इति) न एव ।

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ २-१३॥

देहिनः अस्मिन् यथा देहे कौमारम् यौवनम् जरा ।
तथा देहान्तर-प्राप्तिः धीरः तत्र न मुह्यति ॥ २-१३॥

देहिनः अस्मिन् देहे यथा कौमारम् यौवनम् जरा, तथा
देहान्तर-प्राप्तिः । तत्र धीरः न मुह्यति ।

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ २-१४॥

मात्रा-स्पर्शाः तु कौन्तेय शीत-उष्ण-सुख-दुःख-दाः ।
आगम अपायिनः अनित्याः । भारत तान् तितिक्षस्व ॥ २-१४॥

हे कौन्तेय! मात्रा-स्पर्शाः तु शीत-उष्ण-सुख-दुःख-दाः,
आगम अपायिनः, अनित्याः । हे भारत! तान् तितिक्षस्व ।

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ २-१५॥

यम् हि न व्यथयन्ति एते पुरुषम् पुरुष-ऋषभ ।
सम-दुःख-सुखम् धीरम् सः अमृतत्वाय कल्पते ॥ २-१५॥

हे पुरुष-ऋषभ! हि यम् सम-दुःख-सुखम् धीरम् पुरुषम्

एते न व्यथयन्ति, सः अमृतत्वाय कल्पते ।

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ २-१६ ॥

न असतः विद्यते भावः न अभावः विद्यते सतः ।
उभयोः अपि दृष्टः अन्तः तु अनयोः तत्त्व-दर्शिभिः ॥ २-१६ ॥

असतः भावः न विद्यते सतः अभावः न विद्यते । तत्त्व-दर्शिभिः तु उभयोः अपि अनयोः अन्तः दृष्टः ।

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ २-१७ ॥

अविनाशि तु तत् विद्धि येन सर्वम् इदम् ततम् ।
विनाशम् अव्ययस्य अस्य न कश्चित् कर्तुम् अर्हति ॥ २-१७ ॥

विद्धि, येन इदम् सर्वम् ततम्, तत् तु अविनाशि । अस्य अव्ययस्य विनाशम् कर्तुम्, कश्चित् न अर्हति ।

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ २-१८ ॥

अन्तवन्तः इमे देहाः नित्यस्य उक्ताः शरीरिणः ।
अनाशिनः अप्रमेयस्य तस्मात् युध्यस्व भारत ॥ २-१८ ॥

अनाशिनः अप्रमेयस्य नित्यस्य शरीरिणः इमे देहाः अन्तवन्तः उक्ताः । हे भारत! तस्मात् युध्यस्व ।

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ २-१९ ॥

यः एनम् वेत्ति हन्तारम् यः च एनम् मन्यते हतम्
उभौ तौ न विजानीतः न अयम् हन्ति न हन्यते ॥ २-१९ ॥

यः एनम् हन्तारम् वेत्ति, यः च एनम् हतम् मन्यते तौ उभौ

न विजानीतः, अयम् न हन्ति न हन्यते ।

न जायते म्रियते वा कदाचिन्
नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २-२०॥

न जायते म्रियते वा कदाचित्
न अयम् भूत्वा अभविता वा न भूयः ।
अजः नित्यः शाश्वतः अयम् पुराणः
न हन्यते हन्यमाने शरीरे ॥ २-२०॥

अयम् कदाचित् न जायते, न वा म्रियते, ( अयम्) भूत्वा भूयः अभविता वा न। अयम् अजः नित्यः शाश्वतः पुराणः, शरीरे हन्यमाने न हन्यते ।

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २-२१॥

वेद अविनाशिनम् नित्यम् यः एनम् अजम् अव्ययम् ।
कथम् सः पुरुषः पार्थ कम् घातयति हन्ति कम् ॥ २-२१॥

हे पार्थ! यः एनम् अविनाशिनम् नित्यम् अजम् अव्ययम् वेद, सः पुरुषः कथम् कम् घातयति, कम् हन्ति ?

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २-२२॥

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरः अपराणि ।
तथा शरीराणि विहाय जीर्णानि
अन्यानि संयाति नवानि देही ॥ २-२२॥

यथा नरः जीर्णानि वासांसि विहाय, अपराणि नवानि गृह्णाति,

तथा देही जीर्णानि शरीराणि विहाय अन्यानि नवानि संयाति ।

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २-२३॥

न एनम् छिन्दन्ति शस्त्राणि न एनम् दहति पावकः ।
न च एनम् क्लेदयन्ति आपः न शोषयति मारुतः ॥ २-२३॥

एनम् शस्त्राणि न छिन्दन्ति, एनम् पावकः न दहति
एनम् आपः न क्लेदयन्ति, ( एनम्) च मारुतः न शोषयति ।

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २-२४॥

अच्छेद्यः अयम् अदाह्यः अयम् अक्लेद्यः अशोष्यः एव च ।
नित्यः सर्वगतः स्थाणुः अचलः अयम् सनातनः ॥ २-२४॥

अयम् अच्छेद्यः, अयम् अदाह्यः, अयम् अक्लेद्यः, ( अयम्)
अशोष्यः च एव । अयम् नित्यः, सर्वगतः, स्थाणुः, अचलः, सनातनः ।

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २-२५॥

अव्यक्तः अयम् अचिन्त्यः अयम् अविकार्यः अयम् उच्यते ।
तस्मात् एवम् विदित्वा एनम् न अनुशोचितुम् अर्हसि ॥ २-२५॥

अयम् अव्यक्तः, अयम् अचिन्त्यः, अयम् अविकार्यः उच्यते ।
तस्मात् एनम् एवम् विदित्वा ( त्वं) अनुशोचितुम् न अर्हसि ।

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २-२६॥

अथ च एनम् नित्य-जातम् नित्यम् वा मन्यसे मृतम् ।
तथा अपि त्वम् महा-बाहो न एनम् शोचितुम् अर्हसि ॥ २-२६॥

अथ च एनम् नित्य-जातम्, नित्यम् वा मृतम् मन्यसे ,

तथा अपि हे महा-बाहो! त्वम् एनम् शोचितुम् न अर्हसि ।

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २-२७॥

जातस्य हि ध्रुवः मृत्युः ध्रुवम् जन्म मृतस्य च ।
तस्मात् अपरिहार्ये अर्थे न त्वम् शोचितुम् अर्हसि ॥ २-२७॥

हि जातस्य मृत्युः ध्रुवः, मृतस्य च जन्म ध्रुवम्,
तस्मात् अपरिहार्ये अर्थे त्वम् शोचितुम् न अर्हसि ।

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २-२८॥

अव्यक्त-आदीनि भूतानि व्यक्त-मध्यानि भारत ।
अव्यक्त-निधनानि एव तत्र का परिदेवना ॥ २-२८॥

हे भारत! भूतानि अव्यक्त-आदीनि व्यक्त-मध्यानि अव्यक्त-निधनानि एव,
तत्र परिदेवना का?

आश्चर्यवत्पश्यति कश्चिदेन-
मार्श्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २-२९॥

आश्चर्यवत् पश्यति कश्चित् एनम्
आश्चर्यवत् वदति तथा एव च अन्यः ।
आश्चर्यवत् च एनम् अन्यः शृणोति
श्रुत्वा अपि एनम् वेद न च एव कश्चित् ॥ २-२९॥

कश्चित् एनम् आश्चर्यवत् पश्यति, तथा एव च अन्यः
एनम् आश्चर्यवत् वदति, अन्यः च एनम् आश्चर्यवत् शृणोति;
श्रुत्वा अपि च कश्चित् एव न वेद ।

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ २-३०॥

देही नित्यम् अवध्यः अयम् देहे सर्वस्य भारत ।
तस्मात् सर्वाणि भूतानि न त्वम् शोचितुम् अर्हसि ॥ २-३०॥

हे भारत! सर्वस्य देहे अयम् देही नित्यम् अवध्यः; तस्मात् त्वम् सर्वाणि भूतानि शोचितुम् न अर्हसि ।

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ २-३१॥

स्वधर्मम् अपि च अवेक्ष्य न विकम्पितुम् अर्हसि ।
धर्म्यात् हि युद्धात् श्रेयः अन्यत् क्षत्रियस्य न विद्यते ॥ २-३१॥

स्वधर्मम् च अपि अवेक्ष्य विकम्पितुम् न अर्हसि । हि क्षत्रियस्य धर्म्यात् युद्धात् अन्यत् श्रेयः न विद्यते ।

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ २-३२॥

यत् ऋच्छया च उपपन्नं स्वर्ग-द्वारम् अपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धम् ईदृशम् ॥ २-३२॥

हे पार्थ! यत् ऋच्छया च उपपन्नम् ईदृशम् अपावृतम् स्वर्ग-द्वारम् युद्धम् सुखिनः क्षत्रियाः लभन्ते ।

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ २-३३॥

अथ चेत् त्वम् इमम् धर्म्यम् सङ्ग्रामम् न करिष्यसि ।
ततः स्वधर्मम् कीर्तिम् च हित्वा पापम् अवाप्स्यसि ॥ २-३३॥

अथ त्वम् इमम् धर्म्यम् सङ्ग्रामम् न करिष्यसि चेत्, ततः स्वधर्मम् कीर्तिम् च हित्वा पापम् अवाप्स्यसि ।

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ २-३४॥

अकीर्तिम् च अपि भूतानि कथयिष्यन्ति ते अव्ययाम् ।
सम्भावितस्य च अकीर्तिः मरणात् अतिरिच्यते ॥ २-३४॥

अपि च भूतानि ते अव्ययाम् अकीर्तिम् कथयिष्यन्ति ।
सम्भावितस्य च अकीर्तिः मरणात् अतिरिच्यते ।

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ २-३५॥

भयात् रणात् उपरतम् मंस्यन्ते त्वाम् महारथाः ।
येषाम् च त्वम् बहु-मतः भूत्वा यास्यसि लाघवम् ॥ २-३५॥

महारथाः त्वाम् भयात् रणात् उपरतम् मंस्यन्ते;
येषाम् च त्वम् बहु-मतः भूत्वा, लाघवम् यास्यसि ।

अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ २-३६॥

अवाच्य-वादान् च बहून् वदिष्यन्ति तव अहिताः ।
निन्दन्तः तव सामर्थ्यम् ततः दुःखतरम् नु किम् ॥ २-३६॥

तव सामर्थ्यम् निन्दन्तः तव अहिताः च बहून् अवाच्य-वादान्
वदिष्यन्ति । ततः किम् नु दुःखतरम्?

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ २-३७॥

हतः वा प्राप्स्यसि स्वर्गम् जित्वा वा भोक्ष्यसे महीम् ।
तस्मात् उत्तिष्ठ कौन्तेय युद्धाय कृत-निश्चयः ॥ २-३७॥

हतः वा स्वर्गम् प्राप्स्यसि, जित्वा वा महीम् भोक्ष्यसे ।
हे कौन्तेय! तस्मात् युद्धाय कृत-निश्चयः उत्तिष्ठ ।

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ २-३८॥

सुख-दुःखे समे कृत्वा लाभ-अलाभौ जय-अजयौ ।
ततः युद्धाय युज्यस्व न एवम् पापम् अवाप्स्यसि ॥ २-३८॥

सुख-दुःखे लाभ-अलाभौ जय-अजयौ समे कृत्वा ततः युद्धाय युज्यस्व ।
एवम् पापम् न अवाप्स्यसि ।

एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ २-३९॥

एषा ते अभिहिता साङ्ख्ये बुद्धिः योगे तु इमाम् शृणु ।
बुद्ध्या युक्तः यया पार्थ कर्म-बन्धम् प्रहास्यसि ॥ २-३९॥

हे पार्थ! एषा ते साङ्ख्ये बुद्धिः अभिहिता; योगे तु इमाम् ( बुद्धिं)
शृणु । यया बुद्ध्या युक्तः ( त्वं) कर्म-बन्धम् प्रहास्यसि ।

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ २-४०॥

न इह अभिक्रम-नाशः अस्ति प्रत्यवायः न विद्यते ।
स्वल्पम् अपि अस्य धर्मस्य त्रायते महतः भयात् ॥ २-४०॥

इह अभिक्रम-नाशः न अस्ति, प्रत्यवायः न विद्यते, अस्य धर्मस्य
स्वल्पम् अपि ( अनुष्ठानं) महतः भयात् त्रायते ।

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ २-४१॥

व्यवसाय-आत्मिका बुद्धिः एका इह कुरु-नन्दन ।
बहु-शाखाः हि अनन्ताः च बुद्धयः अव्यवसायिनाम् ॥ २-४१॥

हे कुरु-नन्दन! इह व्यवसाय-आत्मिका एका बुद्धिः ।
अव्यवसायिनाम् हि बुद्धयः अनन्ताः बहु-शाखाः च ।

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ २-४२॥

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ २-४३॥

भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ २-४४॥

याम् इमाम् पुष्पिताम् वाचम् प्रवदन्ति अविपश्चितः ।
वेद-वाद-रताः पार्थ न अन्यत् अस्ति इति वादिनः ॥ २-४२॥

काम-आत्मानः स्वर्ग-पराः जन्म-कर्म-फल-प्रदाम् ।
क्रिया-विशेष-बहुलाम् भोग-ऐश्वर्य-गतिम् प्रति ॥ २-४३॥

भोग-ऐश्वर्य-प्रसक्तानाम् तया अपहृत-चेतसाम् ।
व्यवसाय-आत्मिका बुद्धिः समाधौ न विधीयते ॥ २-४४॥

हे पार्थ! वेद-वाद-रताः, अन्यत् न अस्ति इति वादिनः,
अविपश्चितः, काम-आत्मानः, स्वर्ग-पराः, भोग-ऐश्वर्य-गतिम्
प्रति क्रिया-विशेष-बहुलाम् जन्म-कर्म-फल-प्रदाम् याम्
इमाम् पुष्पिताम् वाचम् प्रवदन्ति, तया अपहृत-चेतसाम्
भोग-ऐश्वर्य-प्रसक्तानाम् बुद्धिः व्यवसाय-आत्मिका ( भूत्वा)
समाधौ न विधीयते ।

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ २-४५॥

त्रैगुण्य-विषयाः वेदाः निस्त्रैगुण्यः भवार्जुन ।
निर्द्वन्द्वः नित्य-सत्त्वस्थः निर्योगक्षेमः आत्मवान् ॥ २-४५॥

हे अर्जुन! वेदाः त्रैगुण्य-विषयाः । ( त्वं) निस्त्रैगुण्यः,
नित्य-सत्त्वस्थः, निर्द्वन्द्वः, निर्योगक्षेमः आत्मवान् भव ।

यावानर्थ उदपाने सर्वतः सम्प्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ २-४६॥

यावान् अर्थः उदपाने सर्वतः सम्प्लुतोदके ।

तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ २-४६॥

यावान् अर्थः उदपाने ( तावान्) सर्वतः सम्प्लुतोदके ( भवति) ।
( तथा यावान् अर्थः) सर्वेषु वेदेषु तावान् विजानतः
ब्राह्मणस्य ( भवति) ।

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ २-४७॥

कर्मणि एव अधिकारः ते मा फलेषु कदाचन ।
मा कर्म-फल-हेतुः भूः मा ते सङ्गः अस्तु अकर्मणि ॥ २-४७॥

ते अधिकारः कर्मणि एव; कदाचन फलेषु मा । कर्म-फल-हेतुः
मा भूः ते सङ्गः ( च) अकर्मणि मा अस्तु ।

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ २-४८॥

योगस्थः कुरु कर्माणि सङ्गम् त्यक्त्वा धनञ्जय ।
सिद्धि असिद्ध्योः समः भूत्वा समत्वम् योगः उच्यते ॥ २-४८॥

हे धनञ्जय! सङ्गम् त्यक्त्वा, सिद्धि-असिद्ध्योः समः
भूत्वा, योगस्थः कर्माणि कुरु । समत्वम् योगः उच्यते ।

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ २-४९॥

दूरेण हि अवरम् कर्म बुद्धि-योगात् धनञ्जय ।
बुद्धौ शरणम् अन्विच्छ कृपणाः फल-हेतवः ॥ २-४९॥

हे धनञ्जय! कर्म बुद्धि-योगात् दूरेण अवरम् हि ।
बुद्धौ शरणम् अन्विच्छ । फल-हेतवः कृपणाः ।

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ २-५०॥

बुद्धि-युक्तः जहाति इह उभे सुकृत-दुष्कृते ।
तस्मात् योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ २-५०॥

इह बुद्धि-युक्तः उभे सुकृत-दुष्कृते जहाति । तस्मात् योगाय युज्यस्व ।
योगः कर्मसु कौशलम् ।

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ २-५१॥

कर्मजम् बुद्धि-युक्ताः हि फलं त्यक्त्वा मनीषिणः ।
जन्म-बन्ध-विनिर्मुक्ताः पदम् गच्छन्ति अनामयम् ॥ २-५१॥

हि बुद्धि-युक्ताः मनीषिणः कर्मजम् फलं त्यक्त्वा
जन्म-बन्ध-विनिर्मुक्ताः अनामयम् पदम् गच्छन्ति ।

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ २-५२॥

यदा ते मोह-कलिलम् बुद्धिः व्यतितरिष्यति ।
तदा गन्तासि निर्वेदम् श्रोतव्यस्य श्रुतस्य च ॥ २-५२॥

यदा ते बुद्धिः मोह-कलिलम् व्यतितरिष्यति, तदा श्रोतव्यस्य
श्रुतस्य च निर्वेदम् गन्तासि ।

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ २-५३॥

श्रुति-विप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधौ अचला बुद्धिः तदा योगम् अवाप्स्यसि ॥ २-५३॥

यदा श्रुति-विप्रतिपन्ना ते बुद्धिः निश्चला ( भूत्वा)
समाधौ अचला स्थास्यति, तदा योगम् अवाप्स्यसि ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ २-५४ ॥

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किम् प्रभाषेत किम् आसीत व्रजेत किम् ॥ २-५४ ॥

हे केशव! समाधिस्थस्य स्थितप्रज्ञस्य का भाषा?
स्थितधीः किम् प्रभाषेत? किम् आसीत? किम् व्रजेत?

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ २-५५ ॥

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मनि एव आत्मना तुष्टः स्थितप्रज्ञः तदा उच्यते ॥ २-५५ ॥

हे पार्थ! यदा ( नरः) मनोगतान् सर्वान् कामान्
प्रजहाति, आत्मनि एव आत्मना तुष्टः ( भवति) तदा स्थितप्रज्ञः उच्यते ।

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ २-५६ ॥

दुःखेषु अनुद्विग्न-मनाः सुखेषु विगत-स्पृहः ।
वीत-राग-भय-क्रोधः स्थितधीः मुनिः उच्यते ॥ २-५६ ॥

दुःखेषु अनुद्विग्न-मनाः, सुखेषु विगत-स्पृहः,
वीत-राग-भय-क्रोधः मुनिः स्थितधीः उच्यते ।

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ २-५७ ॥

यः सर्वत्र अनभिस्नेहः तत् तत् प्राप्य शुभ-अशुभम् ।
न अभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ २-५७ ॥

यः सर्वत्र अनभिस्नेहः, तत् तत् शुभ-अशुभम् प्राप्य,
न अभिनन्दति, न द्वेष्टि, तस्य प्रज्ञा प्रतिष्ठिता ।

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ २-५८॥

यदा संहरते च अयम् कूर्मः अङ्गानि इव सर्वशः ।
इन्द्रियाणि इन्द्रिय-अर्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता ॥ २-५८॥

कूर्मः अङ्गानि इव, यदा अयम् इन्द्रिय-अर्थेभ्यः इन्द्रियाणि
सर्वशः संहरते, ( तदा) तस्य प्रज्ञा प्रतिष्ठिता च ।

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ २-५९॥

विषयाः विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जम् रसः अपि अस्य परम् दृष्ट्वा निवर्तते ॥ २-५९॥

निराहारस्य देहिनः विषयाः रसवर्जम् विनिवर्तन्ते ।
अस्य रसः अपि परम् दृष्ट्वा निवर्तते ।

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ २-६०॥

यततः हि अपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ २-६०॥

हे कौन्तेय! प्रमाथीनि इन्द्रियाणि यततः विपश्चितः अपि
पुरुषस्य मनः प्रसभं हरन्ति हि ।

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ २-६१॥

तानि सर्वाणि संयम्य युक्तः आसीत मत्परः ।
वशे हि यस्य इन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ २-६१॥

तानि सर्वाणि संयम्य युक्तः मत्-परः आसीत । हि यस्य वशे इन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ।

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥ २-६२॥

ध्यायतः विषयान् पुंसः सङ्गः तेषु उपजायते ।
सङ्गात् सञ्जायते कामः कामात् क्रोधः अभिजायते ॥ २-६२॥

विषयान् ध्यायतः पुंसः तेषु सङ्गः उपजायते ।
सङ्गात् कामः सञ्जायते । कामात् क्रोधः अभिजायते ।

क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ २-६३॥

क्रोधात् भवति सम्मोहः सम्मोहात् स्मृति-विभ्रमः ।
स्मृति-भ्रंशात् बुद्धि-नाशः बुद्धि-नाशात् प्रणश्यति ॥

क्रोधात् सम्मोहः भवति । सम्मोहात् स्मृति-विभ्रमः,
स्मृति-भ्रंशात् बुद्धि-नाशः, बुद्धि-नाशात् प्रणश्यति ।

रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन् । or वियुक्तैस्तु
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ २-६४॥

राग-द्वेष-विमुक्तैः तु विषयान् इन्द्रियैः चरन् । or वियुक्तैः तु
आत्म-वश्यैः विधेय-आत्मा प्रसादम् अधिगच्छति ॥ २-६४॥

विधेय-आत्मा तु राग-द्वेष-विमुक्तैः आत्म-वश्यैः इन्द्रियैः
विषयान् चरन् प्रसादम् अधिगच्छति ।

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ २-६५॥

प्रसादे सर्व-दुःखानाम् हानिः अस्य उपजायते ।
प्रसन्न-चेतसः हि आशु बुद्धिः पर्यवतिष्ठते ॥ २-६५॥

प्रसादे अस्य सर्व-दुःखानाम् हानिः उपजायते ।
प्रसन्न-चेतसः हि बुद्धिः आशु पर्यवतिष्ठते ।

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ २-६६ ॥

न अस्ति बुद्धिः अयुक्तस्य न च अयुक्तस्य भावना ।
न च अभावयतः शान्तिः अशान्तस्य कुतः सुखम् ॥ २-६६ ॥

अयुक्तस्य बुद्धिः न अस्ति, अयुक्तस्य च भावना न ( अस्ति) ;
अभावयतः च शान्तिः न ( अस्ति) ; अशान्तस्य सुखम् कुतः?

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ २-६७ ॥

इन्द्रियाणाम् हि चरताम् यत् मनः अनुविधीयते ।
तत् अस्य हरति प्रज्ञाम् वायुः नावम् इव अम्भसि ॥ २-६७ ॥

चरताम् इन्द्रियाणाम् हि यत् मनः अनुविधीयते, तत् अस्य
प्रज्ञाम् अम्भसि हरति वायुः नावम् इव ।

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ २-६८ ॥

तस्मात् यस्य महा-बाहो निगृहीतानि सर्वशः ।
इन्द्रियाणि इन्द्रिय-अर्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता ॥ २-६८ ॥

तस्मात् हे महा-बाहो! यस्य इन्द्रियाणि इन्द्रिय-अर्थेभ्यः सर्वशः
निगृहीतानि तस्य प्रज्ञा प्रतिष्ठिता ।

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ २-६९ ॥

या निशा सर्व-भूतानाम् तस्याम् जागर्ति संयमी ।
यस्याम् जाग्रति भूतानि सा निशा पश्यतः मुनेः ॥ २-६९ ॥

या सर्व-भूतानाम् निशा, तस्याम् संयमी जागर्ति ।
यस्याम् भूतानि जाग्रति, सा पश्यतः मुनेः निशा ।

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ २-७०॥

आपूर्यमाणम् अचल-प्रतिष्ठम्
समुद्रम् आपः प्रविशन्ति यद्वत् ।
तद्वत् कामाः यम् प्रविशन्ति सर्वे
सः शान्तिम् आप्नोति न काम-कामी ॥ २-७०॥

आपूर्यमाणम् अचल-प्रतिष्ठम् समुद्रम् यद्वत्
आपः प्रविशन्ति, तद्वत् यम् सर्वे कामाः प्रविशन्ति,
सः शान्तिम् आप्नोति; काम-कामी न ।

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ २-७१॥

विहाय कामान् यः सर्वान् पुमान् चरति निःस्पृहः ।
निर्ममः निरहङ्कारः सः शान्तिम् अधिगच्छति ॥ २-७१॥

यः पुमान् सर्वान् कामान् विहाय, निःस्पृहः निर्ममः
निरहङ्कारः ( भूत्वा) चरति, सः शान्तिम् अधिगच्छति ।

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ २-७२॥

एषा ब्राह्मी स्थितिः पार्थ न एनाम् प्राप्य विमुह्यति ।
स्थित्वा अस्याम् अन्तकाले अपि ब्रह्म-निर्वाणम् ऋच्छति ॥ २-७२॥

हे पार्थ! एषा ब्राह्मी स्थितिः, एनाम् प्राप्य न विमुह्यति,
अन्तकाले अपि अस्याम् स्थित्वा ब्रह्म-निर्वाणम् ऋच्छति ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु

ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
साङ्ख्ययोगो नाम द्वितीयोऽध्यायः ॥ २॥

ॐ तत् सत् इति श्रीमत् भगवत्-गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्री-कृष्ण-अर्जुन-संवादे
साङ्ख्य-योगः नाम द्वितीयः अध्यायः ॥ २॥

---

अथ तृतीयोऽध्यायः । कर्मयोगः ।
अथ तृतीयः अध्यायः । कर्म-योगः ।
अर्जुन उवाच ।
अर्जुनः उवाच ।

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ ३-१॥

ज्यायसी चेत् कर्मणः ते मता बुद्धिः जनार्दन ।
तत् किम् कर्मणि घोरे माम् नियोजयसि केशव ॥ ३-१॥

हे जनार्दन! कर्मणः बुद्धिः ज्यायसी ते मता चेत्,
तत् हे केशव! माम् घोरे कर्मणि किम् नियोजयसि ?

व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ ३-२॥

व्यामिश्रेण इव वाक्येन बुद्धिं मोहयसि इव मे ।
तत् एकं वद निश्चित्य येन श्रेयः अहम् आप्नुयाम् ॥ ३-२॥

व्यामिश्रेण इव वाक्येन मे बुद्धिं मोहयसि इव । तत् निश्चित्य
एकं वद, येन अहम् श्रेयः आप्नुयाम् ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥ ३-३॥

लोके अस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मया अनघ ।
ज्ञान-योगेन साङ्ख्यानाम् कर्म-योगेन योगिनाम् ॥ ३-३॥

हे अनघ! अस्मिन् लोके साङ्ख्यानाम् ज्ञान-योगेन,
योगिनाम् कर्म-योगेन द्विविधा निष्ठा पुरा मया प्रोक्ता ।

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ३-४ ॥

न कर्मणाम् अनारम्भात् नैष्कर्म्यं पुरुषः अश्नुते ।
न च संन्यसनात् एव सिद्धिम् समधिगच्छति ॥ ३-४ ॥

कर्मणाम् अनारम्भात् पुरुषः नैष्कर्म्यं न अश्नुते ।
( कर्मणां) च संन्यसनात् एव सिद्धिम् न समधिगच्छति ।

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ३-५ ॥

न हि कश्चित् क्षणम् अपि जातु तिष्ठति अकर्मकृत् ।
कार्यते हि अवशः कर्म सर्वः प्रकृतिजैः गुणैः ॥ ३-५ ॥

कश्चित् जातु क्षणम् अपि अकर्मकृत् न हि तिष्ठति ।
प्रकृतिजैः गुणैः सर्वः हि अवशः कर्म कार्यते ।

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ३-६ ॥

कर्म-इन्द्रियाणि संयम्य यः आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः सः उच्यते ॥ ३-६ ॥

यः कर्म-इन्द्रियाणि संयम्य, मनसा इन्द्रियार्थान् स्मरन् आस्ते,
सः विमूढात्मा मिथ्याचारः उच्यते ।

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ३-७ ॥

यः तु इन्द्रियाणि मनसा नियम्य आरभते अर्जुन ।
कर्म-इन्द्रियैः कर्म-योगम् असक्तः सः विशिष्यते ॥ ३-७॥

हे अर्जुन ! यः तु मनसा इन्द्रियाणि नियम्य, असक्तः कर्म-इन्द्रियैः
कर्म-योगम् आरभते, सः विशिष्यते ।

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ३-८॥

नियतम् कुरु कर्म त्वं कर्म ज्यायः हि अकर्मणः ।
शरीर-यात्रा अपि च ते न प्रसिद्ध्येत् अकर्मणः ॥ ३-८॥

त्वं नियतम् कर्म कुरु, अकर्मणः हि कर्म ज्यायः ।
ते शरीर-यात्रा च अपि अकर्मणः न प्रसिद्ध्येत् ।

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ३-९॥

यज्ञार्थात् कर्मणः अन्यत्र लोकः अयम् कर्म-बन्धनः ।
तत् अर्थम् कर्म कौन्तेय मुक्त-सङ्गः समाचर ॥ ३-९॥

यज्ञार्थात् कर्मणः अन्यत्र अयम् लोकः कर्म-बन्धनः ।
हे कौन्तेय! मुक्त-सङ्गः तत् अर्थम् कर्म समाचर ।

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ ३-१०॥

सह-यज्ञाः प्रजाः सृष्ट्वा पुरा उवाच प्रजापतिः ।
अनेन प्रसविष्यध्वम् एषः वः अस्तु इष्ट-कामधुक् ॥ ३-१०॥

पुरा प्रजापतिः सह-यज्ञाः प्रजाः सृष्ट्वा ' अनेन ( यूयं)
प्रसविष्यध्वम्, एषः वः इष्ट-कामधुक् अस्तु' ( इति) उवाच ।

देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ३-११॥

देवान् भावयत अनेन ते देवाः भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परम् अवाप्स्यथ ॥ ३-११॥

अनेन ( यूयं) देवान् भावयत, ते देवाः वः भावयन्तु,
( एवं) परस्परं भावयन्तः परम् श्रेयः अवाप्स्यथ ।

इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ ३-१२॥

इष्टान् भोगान् हि वः देवाः दास्यन्ते यज्ञ-भाविताः ।
तैः दत्तान् अप्रदाय एभ्यः यः भुङ्क्ते स्तेनः एव सः ॥ ३-१२॥

यज्ञ-भाविताः देवाः वः इष्टान् भोगान् दास्यन्ते ।
तैः दत्तान् एभ्यः अप्रदाय, यः भुङ्क्ते, सः हि स्तेनः एव ।

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ ३-१३॥

यज्ञ-शिष्ट आशिनः सन्तः मुच्यन्ते सर्व-किल्बिषैः ।
भुञ्जते ते तु अघं पापाः ये पचन्ति आत्म-कारणात् ॥ ३-१३॥

यज्ञ-शिष्ट आशिनः सन्तः सर्व-किल्बिषैः मुच्यन्ते ।
ये तु आत्म-कारणात् पचन्ति, ते पापाः अघं भुञ्जते ।

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ ३-१४॥

अन्नात् भवन्ति भूतानि पर्जन्यात् अन्न-सम्भवः ।
यज्ञात् भवति पर्जन्यः यज्ञः कर्म-समुद्भवः ॥ ३-१४॥

भूतानि अन्नात् भवन्ति, पर्जन्यात् अन्न-सम्भवः,
पर्जन्यः यज्ञात् भवति, यज्ञः कर्म-समुद्भवः ।

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।

तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ ३-१५ ॥

कर्म ब्रह्म-उद्भवं विद्धि ब्रह्म अक्षर-समुद्भवम् ।
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ ३-१५ ॥

कर्म ब्रह्म-उद्भवं विद्धि, ब्रह्म अक्षर-समुद्भवम्,
तस्मात् सर्वगतं ब्रह्म यज्ञे नित्यं प्रतिष्ठितम् ।

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ ३-१६ ॥

एवं प्रवर्तितम् चक्रम् न अनुवर्तयति इह यः ।
अघायुः इन्द्रिय-आरामः मोघम् पार्थ सः जीवति ॥ ३-१६ ॥

हे पार्थ! एवं प्रवर्तितम् चक्रम् यः इह न अनुवर्तयति,
सः इन्द्रिय-आरामः अघायुः मोघम् जीवति ।

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ ३-१७ ॥

यः तु आत्म-रतिः एव स्यात् आत्म-तृप्तः च मानवः ।
आत्मनि एव च सन्तुष्टः तस्य कार्यम् न विद्यते ॥ ३-१७ ॥

यः तु मानवः आत्म-रतिः एव, आत्म-तृप्तः च,
आत्मनि एव च सन्तुष्टः स्यात् तस्य कार्यम् न विद्यते ।

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ ३-१८ ॥

न एव तस्य कृतेन अर्थः न अकृतेन इह कश्चन ।
न च अस्य सर्व-भूतेषु कश्चित् अर्थ-व्यपाश्रयः ॥ ३-१८ ॥

इह कृतेन तस्य अर्थः न एव, अकृतेन ( अपि) कश्चन अस्य ( अर्थः) न,
( तथा) सर्व-भूतेषु च ( अस्य) कश्चित् अर्थ-व्यपाश्रयः न ।

तस्मादसक्तः सततं कार्यं कर्म समाचर ।

असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ ३-१९ ॥

तस्मात् असक्तः सततम् कार्यम् कर्म समाचर ।
असक्तः हि आचरन् कर्म परम् आप्नोति पूरुषः ॥ ३-१९ ॥

तस्मात् ( त्वं) असक्तः ( सन्) सततम् कार्यम् कर्म समाचर,
हि पूरुषः असक्तः ( सन्) कर्म आचरन्, परम् आप्नोति ।

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ॥ ३-२० ॥

कर्मणा एव हि संसिद्धिम् आस्थिताः जनक-आदयः ।
लोक-संग्रहम् एव अपि सम्पश्यन् कर्तुम् अर्हसि ॥ ३-२० ॥

हि जनक-आदयः कर्मणा एव संसिद्धिम् आस्थिताः ।
( त्वं) अपि लोक-संग्रहम् एव सम्पश्यन् कर्तुम् अर्हसि ।

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ३-२१ ॥

यत् यत् आचरति श्रेष्ठः तत् तत् एव इतरः जनः ।
सः यत् प्रमाणम् कुरुते लोकः तत् अनुवर्तते ॥ ३-२१ ॥

यत् यत् श्रेष्ठः आचरति तत् तत् एव इतरः जनः ( आचरति) ।
सः यत् प्रमाणम् कुरुते, लोकः तत् अनुवर्तते ।

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ ३-२२ ॥

न मे पार्थ अस्ति कर्तव्यम् त्रिषु लोकेषु किञ्चन ।
न अनवाप्तम् अवाप्तव्यम् वर्ते एव च कर्मणि ॥ ३-२२ ॥

हे पार्थ! ( यद्यपि) मे त्रिषु लोकेषु किञ्चन कर्तव्यम् न अस्ति,
अनवाप्तम् अवाप्तव्यम् च न ( अस्ति, तथा अपि अहं) कर्मणि वर्ते एव ।

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।

मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ३-२३॥

यदि हि अहं न वर्तेयम् जातु कर्मणि अतन्द्रितः ।
मम वर्त्म अनुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ३-२३॥

यदि हि अहं अतन्द्रितः ( सन्) कर्मणि जातु न वर्तेयम्, ( तर्हि)
हे पार्थ! मनुष्याः सर्वशः मम वर्त्म अनुवर्तन्ते ।

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ ३-२४॥

उत्सीदेयुः इमे लोकाः न कुर्याम् कर्म चेत् अहम् ।
सङ्करस्य च कर्ता स्याम् उपहन्याम् इमाः प्रजाः ॥ ३-२४॥

अहम् कर्म न कुर्याम् चेत् इमे लोकाः उत्सीदेयुः,
सङ्करस्य कर्ता स्याम् इमाः प्रजाः च उपहन्याम् ।

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ ३-२५॥

सक्ताः कर्मणि अविद्वांसः यथा कुर्वन्ति भारत ।
कुर्यात् विद्वान् तथा असक्तः चिकीर्षुः लोक-संग्रहम् ॥ ३-२५॥

हे भारत! अविद्वांसः यथा कर्मणि सक्ताः ( कर्म) कुर्वन्ति,
तथा लोक-संग्रहम् चिकीर्षुः विद्वान् असक्तः ( सन् कर्म) कुर्यात् ।

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ ३-२६॥

न बुद्धि-भेदम् जनयेत् अज्ञानाम् कर्म-सङ्गिनाम् ।
जोषयेत् सर्व-कर्माणि विद्वान् युक्तः समाचरन् ॥ ३-२६॥

विद्वान् कर्म-सङ्गिनाम् अज्ञानाम् बुद्धि-भेदम् न जनयेत्
( किन्तु) युक्तः समाचरन् सर्व-कर्माणि जोषयेत् ।

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।

अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥ ३-२७॥

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कार-विमूढ-आत्मा कर्ता अहम् इति मन्यते ॥ ३-२७॥

प्रकृतेः गुणैः कर्माणि सर्वशः क्रियमाणानि ( सन्ति, परन्तु)
अहङ्कार-विमूढ-आत्मा ' अहम्' कर्ता इति मन्यते ।

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ ३-२८॥

तत्त्ववित् तु महाबाहो गुण-कर्म-विभागयोः ।
गुणाः गुणेषु वर्तन्ते इति मत्वा न सज्जते ॥ ३-२८॥

हे महाबाहो! गुण-कर्म-विभागयोः तत्त्ववित् तु
' गुणाः गुणेषु वर्तन्ते' इति मत्वा न सज्जते ।

प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥ ३-२९॥

प्रकृतेः गुण-सम्मूढाः सज्जन्ते गुण-कर्मसु ।
तान् अकृत्स्नविदः मन्दान् कृत्स्नवित् न विचालयेत् ॥ ३-२९॥

प्रकृतेः गुण-सम्मूढाः गुण-कर्मसु सज्जन्ते, तान्
अकृत्स्नविदः मन्दान् कृत्स्नवित् न विचालयेत् ।

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३-३०॥

मयि सर्वाणि कर्माणि संन्यस्य अध्यात्म-चेतसा ।
निराशीः निर्ममः भूत्वा युध्यस्व विगत-ज्वरः ॥ ३-३०॥

मयि अध्यात्म-चेतसा सर्वाणि कर्माणि संन्यस्य निराशीः
निर्ममः विगत-ज्वरः भूत्वा, युध्यस्व ।

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।

श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३-३१॥

ये मे मतम् इदम् नित्यम् अनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तः अनसूयन्तः मुच्यन्ते ते अपि कर्मभिः ॥ ३-३१॥

ये मानवाः श्रद्धावन्तः अनसूयन्तः इदम् मे मतम्
नित्यम् अनुतिष्ठन्ति, ते अपि कर्मभिः मुच्यन्ते ।

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३-३२॥

ये तु एतत् अभ्यसूयन्तः न अनुतिष्ठन्ति मे मतम् ।
सर्व-ज्ञान-विमूढान् तान् विद्धि नष्टान् अचेतसः ॥ ३-३२॥

ये तु एतत् अभ्यसूयन्तः मे मतम् न अनुतिष्ठन्ति, तान्
सर्व-ज्ञान-विमूढान् अचेतसः नष्टान् विद्धि ।

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३-३३॥

सदृशम् चेष्टते स्वस्याः प्रकृतेः ज्ञानवान् अपि ।
प्रकृतिम् यान्ति भूतानि निग्रहः किम् करिष्यति ॥ ३-३३॥

ज्ञानवान् अपि स्वस्याः प्रकृतेः सदृशम् चेष्टते ।
भूतानि प्रकृतिम् यान्ति । निग्रहः किम् करिष्यति ?

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३-३४॥

इन्द्रियस्य इन्द्रियस्य-अर्थे राग-द्वेषौ व्यवस्थितौ ।
तयोः न वशम् आगच्छेत् तौ हि अस्य परिपन्थिनौ ॥ ३-३४॥

इन्द्रियस्य-अर्थे इन्द्रियस्य राग-द्वेषौ व्यवस्थितौ,
तयोः वशम् न आगच्छेत् । तौ हि अस्य परिपन्थिनौ ।

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।

स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३-३५ ॥

श्रेयान् स्वधर्मः विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनम् श्रेयः परधर्मः भय-आवहः ॥ ३-३५ ॥

स्वनुष्ठितात् परधर्मात् विगुणः स्वधर्मः ( अपि) श्रेयान् ।
स्वधर्मे निधनम् श्रेयः । परधर्मः भय-आवहः ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३-३६ ॥

अथ केन प्रयुक्तः अयं पापम् चरति पूरुषः ।
अनिच्छन् अपि वार्ष्णेय बलात् इव नियोजितः ॥ ३-३६ ॥

हे वार्ष्णेय! अथ केन प्रयुक्तः अयं पूरुषः अनिच्छन् अपि,
बलात् नियोजितः इव पापम् चरति?

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३-३७ ॥

कामः एषः क्रोधः एषः रजः गुण-समुद्भवः ।
महा-अशनः महा-पाप्मा विद्धि एनम् इह वैरिणम् ॥ ३-३७ ॥

रजः गुण-समुद्भवः महा-पाप्मा महा-अशनः एषः कामः,
एषः क्रोधः ( अस्ति; त्वं) एनम् इह वैरिणम् विद्धि ।

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।

यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३-३८॥

धूमेन आव्रियते वह्निः यथा आदर्शः मलेन च ।
यथा उल्बेन आवृतः गर्भः तथा तेन इदम् आवृतम् ॥ ३-३८॥

यथा धूमेन वह्निः, यथा च मलेन आदर्शः, आव्रियते,
( यथा) उल्बेन गर्भः आवृतः, तथा तेन इदम् आवृतम् ।

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३-३९॥

आवृतम् ज्ञानम् एतेन ज्ञानिनः नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेण अनलेन च ॥ ३-३९॥

हे कौन्तेय! नित्यवैरिणा एतेन दुष्पूरेण कामरूपेण
च अनलेन ज्ञानिनः ज्ञानम् आवृतम् ।

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ३-४०॥

इन्द्रियाणि मनः बुद्धिः अस्य अधिष्ठानम् उच्यते ।
एतैः विमोहयति एषः ज्ञानम् आवृत्य देहिनम् ॥ ३-४०॥

इन्द्रियाणि मनः बुद्धिः अस्य अधिष्ठानम् उच्यते ।
एषः एतैः ज्ञानम् आवृत्य देहिनम् विमोहयति ।

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ३-४१॥

तस्मात् त्वम् इन्द्रियाणि आदौ नियम्य भरतर्षभ ।
पाप्मानम् प्रजहि हि एनं ज्ञान-विज्ञान-नाशनम् ॥ ३-४१॥

हे भरतर्षभ! तस्मात् त्वम् आदौ इन्द्रियाणि नियम्य,
ज्ञान-विज्ञान-नाशनम् एनं पाप्मानम् प्रजहि हि ।

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ३-४२॥

इन्द्रियाणि पराणि आहुः इन्द्रियेभ्यः परम् मनः ।
मनसः तु परा बुद्धिः यः बुद्धेः परतः तु सः ॥ ३-४२॥

इन्द्रियाणि पराणि आहुः, इन्द्रियेभ्यः मनः परम्, मनसः तु
बुद्धिः परा, यः तु बुद्धेः परतः सः ( आत्मा अस्ति) ।

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ३-४३॥

एवम् बुद्धेः परम् बुद्ध्वा संस्तभ्य आत्मानम् आत्मना ।
जहि शत्रुम् महाबाहो काम-रूपम् दुरासदम् ॥ ३-४३॥

हे महाबाहो! एवम् ( आत्मानं) बुद्धेः परम् बुद्ध्वा
आत्मना आत्मानम् संस्तभ्य, काम-रूपम् दुरासदम् शत्रुम् जहि ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३॥

ॐ तत् सत् इति श्रीमत् भगवत्-गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्री-कृष्ण-अर्जुन-संवादे
कर्म-योगः नाम तृतीयः अध्यायः ॥ ३॥

---

अथ चतुर्थोऽध्यायः । ज्ञानकर्मसंन्यासयोगः
अथ चतुर्थोअः अध्यायः । ज्ञान-कर्म-संन्यास-योगः
श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ ४-१॥

इमम् विवस्वते योगम् प्रोक्तवान् अहम् अव्ययम् ।
विवस्वान् मनवे प्राह मनुः इक्ष्वाकवे अब्रवीत् ॥ ४-१॥

अहम् इमम् अव्ययम् योगम् विवस्वते प्रोक्तवान् ।
विवस्वान् मनवे प्राह । मनुः इक्ष्वाकवे अब्रवीत् ।

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ॥ ४-२॥

एवम् परम्परा-प्राप्तम् इमम् राजर्षयः विदुः ।
सः कालेन इह महता योगः नष्टः परन्तप ॥ ४-२॥

हे परन्तप! एवम् परम्परा-प्राप्तम् इमम् ( योगं)
राजर्षयः विदुः । सः योगः महता कालेन इह नष्टः ।

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ४-३॥

सः एव अयम् मया ते अद्य योगः प्रोक्तः पुरातनः ।
भक्तः असि मे सखा च इति रहस्यम् हि एतत् उत्तमम् ॥ ४-३॥

सः एव अयम् पुरातनः योगः मया अद्य ते प्रोक्तः । ( त्वं) मे
भक्तः सखा च असि इति, हि एतत् उत्तमम् रहस्यम् ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४-४॥

अपरम् भवतः जन्म परम् जन्म विवस्वतः ।
कथम् एतत् विजानीयाम् त्वम् आदौ प्रोक्तवान् इति ॥ ४-४॥

भवतः जन्म अपरम्, विवस्वतः जन्म परम्, ( अतः) त्वम्
आदौ एतत् प्रोक्तवान् इति कथम् विजानीयाम् ?

श्रीभगवानुवाच ।
श्रीभगवानुवाच ।

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ४-५॥

बहूनि मे व्यतीतानि जन्मानि तव च अर्जुन ।
तानि अहम् वेद सर्वाणि न त्वम् वेत्थ परन्तप ॥ ४-५॥

हे परन्तप अर्जुन! मे तव च बहूनि जन्मानि व्यतीतानि;
तानि सर्वाणि अहम् वेद, त्वम् न वेत्थ ।

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ४-६॥

अजः अपि सन् अव्यय-आत्मा भूतानाम् ईश्वरः अपि सन् ।
प्रकृतिम् स्वाम् अधिष्ठाय सम्भवामि आत्म-मायया ॥ ४-६॥

( अहं) अजः अव्यय-आत्मा अपि सन्, भूतानाम् ईश्वरः अपि सन्,
स्वाम् प्रकृतिम् अधिष्ठाय, आत्म-मायया सम्भवामि ।

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ४-७॥

यदा यदा हि धर्मस्य ग्लानिः भवति भारत ।
अभ्युत्थानम् अधर्मस्य तदा आत्मानम् सृजामि अहम् ॥ ४-७॥

हे भारत! यदा यदा हि धर्मस्य ग्लानिः, अधर्मस्य ( च)
अभ्युत्थानम् भवति, तदा अहम् आत्मानम् सृजामि ।

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ४-८॥

परित्राणाय साधूनाम् विनाशाय च दुष्कृताम् ।
धर्म-संस्थापन-अर्थाय सम्भवामि युगे युगे ॥ ४-८॥

साधूनाम् परित्राणाय, दुष्कृताम् विनाशाय,
धर्म-संस्थापन-अर्थाय च, ( अहं) युगे युगे सम्भवामि ।

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ४-९ ॥

जन्म कर्म च मे दिव्यम् एवम् यः वेत्ति तत्त्वतः ।
त्यक्त्वा देहम् पुनः जन्म न एति माम् एति सः अर्जुन ॥ ४-९ ॥

हे अर्जुन! यः मे दिव्यम् जन्म कर्म च एवम् तत्त्वतः वेत्ति,
सः देहम् त्यक्त्वा, पुनः जन्म न एति, ( किन्तु सः) माम् एति ।

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ ४-१० ॥

वीत-राग-भय-क्रोधाः मन्मयाः माम् उपाश्रिताः ।
बहवः ज्ञान-तपसा पूताः मद्भावम् आगताः ॥ ४-१० ॥

वीत-राग-भय-क्रोधाः, मन्मयाः माम् उपाश्रिताः,
ज्ञान-तपसा पूताः, बहवः मद्भावम् आगताः ।

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ४-११ ॥

ये यथा माम् प्रपद्यन्ते तान् तथा एव भजाम्यि अहम् ।
मम वर्त्म अनुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ४-११ ॥

ये यथा माम् प्रपद्यन्ते, तान् तथा एव अहम् भजामि ।
हे पार्थ! मनुष्याः सर्वशः मम वर्त्म अनुवर्तन्ते ।

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ ४-१२ ॥

काङ्क्षन्तः कर्मणाम् सिद्धिम् यजन्ते इह देवताः ।
क्षिप्रम् हि मानुषे लोके सिद्धिः भवति कर्मजा ॥ ४-१२ ॥

कर्मणाम् सिद्धिम् काङ्क्षन्तः ( मनुष्याः) इह देवताः यजन्ते;
हि मानुषे लोके कर्मजा सिद्धिः क्षिप्रम् भवति ।

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ ४-१३॥

चातुर्वर्ण्यम् मया सृष्टम् गुण-कर्म-विभागशः ।
तस्य कर्तारम् अपि माम् विद्धि अकर्तारम् अव्ययम् ॥ ४-१३॥

मया गुण-कर्म-विभागशः चातुर्वर्ण्यम् सृष्टम्,
तस्य कर्तारम् अपि माम् अव्ययम् अकर्तारम् विद्धि ।

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ ४-१४॥

न माम् कर्माणि लिम्पन्ति न मे कर्म-फले स्पृहा ।
इति माम् यः अभिजानाति कर्मभिः न स बध्यते ॥ ४-१४॥

कर्म-फले मे स्पृहा न ( अतः) कर्माणि माम् न लिम्पन्ति ।
इति यः माम् अभिजानाति, सः कर्मभिः न बध्यते ।

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ ४-१५॥

एवम् ज्ञात्वा कृतम् कर्म पूर्वैः अपि मुमुक्षुभिः ।
कुरु कर्म एव तस्मात् त्वम् पूर्वैः पूर्वतरम् कृतम् ॥ ४-१५॥

एवम् ज्ञात्वा पूर्वैः मुमुक्षुभिः अपि कर्म कृतम् ।
तस्मात् त्वम् पूर्वैः पूर्वतरम् कृतम् एव कर्म कुरु ।

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ ४-१६॥

किम् कर्म किम् अकर्म इति कवयः अपि अत्र मोहिताः ।
तत् ते कर्म प्रवक्ष्यामि यत् ज्ञात्वा मोक्ष्यसे अशुभात् ॥ ४-१६॥

' किम् कर्म, किम् अकर्म' इति अत्र कवयः अपि मोहिताः ।
तत् कर्म ते प्रवक्ष्यामि, यत् ज्ञात्वा अशुभात् मोक्ष्यसे ।

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ ४-१७॥

कर्मणः हि अपि बोद्धव्यम् बोद्धव्यम् च विकर्मणः ।
अकर्मणः च बोद्धव्यम् गहना कर्मणः गतिः ॥ ४-१७॥

कर्मणः ( तत्त्वं) हि अपि बोद्धव्यम्, विकर्मणः च ( तत्त्वं)
बोद्धव्यम्, ( तथा) अकर्मणः च ( तत्त्वं) बोद्धव्यम्,
कर्मणः गतिः गहना ।

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ ४-१८॥

कर्मणि अकर्म यः पश्येत् अकर्मणि च कर्म यः ।
सः बुद्धिमान् मनुष्येषु सः युक्तः कृत्स्न-कर्म-कृत् ॥ ४-१८॥

यः कर्मणि अकर्म पश्येत् अकर्मणि च यः कर्म ( पश्येत्) सः
मनुष्येषु बुद्धिमान्, सः युक्तः, ( सः) कृत्स्न-कर्म-कृत् ।

यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ ४-१९॥

यस्य सर्वे समारम्भाः काम-सङ्कल्प-वर्जिताः ।
ज्ञान-अग्नि-दग्ध-कर्माणम् तम् आहुः पण्डितम् बुधाः ॥ ४-१९॥

यस्य सर्वे समारम्भाः काम-सङ्कल्प-वर्जिताः, तम्
ज्ञान-अग्नि-दग्ध-कर्माणम् बुधाः पण्डितम् आहुः ।

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥ ४-२०॥

त्यक्त्वा कर्म-फल-आसङ्गम् नित्य-तृप्तः निराश्रयः ।
कर्मणि अभिप्रवृत्तः अपि न एव किञ्चित् करोति सः ॥ ४-२०॥

( यः) कर्म-फल-आसङ्गम् त्यक्त्वा नित्य-तृप्तः निराश्रयः,

सः कर्मणि अभिप्रवृत्तः अपि न एव किञ्चित् करोति ।

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४-२१॥

निराशीः यत-चित्त-आत्मा त्यक्त-सर्व-परिग्रहः ।
शारीरम् केवलम् कर्म कुर्वन् न आप्नोति किल्बिषम् ॥ ४-२१॥

निराशीः यत-चित्त-आत्मा त्यक्त-सर्व-परिग्रहः, केवलम्
शारीरम् कर्म कुर्वन् किल्बिषम् न आप्नोति ।

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ ४-२२॥

यदृच्छा-लाभ-सन्तुष्टः द्वन्द्व-अतीतः विमत्सरः ।
समः सिद्धौ असिद्धौ च कृत्वा अपि न निबध्यते ॥ ४-२२॥

यदृच्छा-लाभ-सन्तुष्टः द्वन्द्व-अतीतः विमत्सरः सिद्धौ
असिद्धौ च समः, कृत्वा अपि न निबध्यते ।

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ ४-२३॥

गत-सङ्गस्य मुक्तस्य ज्ञान-अवस्थित-चेतसः ।
यज्ञाय आचरतः कर्म समग्रम् प्रविलीयते ॥ ४-२३॥

गत-सङ्गस्य ज्ञान-अवस्थित-चेतसः यज्ञाय आचरतः
मुक्तस्य कर्म समग्रम् प्रविलीयते ।

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ ४-२४॥

ब्रह्म-अर्पणं ब्रह्म हविः ब्रह्म-अग्नौ ब्रह्मणा हुतम् ।
ब्रह्म एव तेन गन्तव्यम् ब्रह्म-कर्म-समाधिना ॥ ४-२४॥

ब्रह्म अर्पणं, ब्रह्म हविः, ब्रह्म-अग्नौ ब्रह्मणा हुतम्,

ब्रह्म-कर्म-समाधिना तेन ब्रह्म एव गन्तव्यम् ।

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ ४-२५ ॥

दैवम् एव अपरे यज्ञम् योगिनः पर्युपासते ।
ब्रह्म-अग्नौ अपरे यज्ञं यज्ञेन एव उपजुह्वति ॥ ४-२५ ॥

अपरे योगिनः दैवम् एव यज्ञम् पर्युपासते; अपरे
ब्रह्म-अग्नौ यज्ञेन यज्ञं एव उपजुह्वति ।

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ ४-२६ ॥

श्रोत्र-आदीनि इन्द्रियाणि अन्ये संयम-अग्निषु जुह्वति ।
शब्द-आदीन् विषयान् अन्ये इन्द्रिय-अग्निषु जुह्वति ॥ ४-२६ ॥

अन्ये श्रोत्र-आदीनि इन्द्रियाणि संयम-अग्निषु जुह्वति, अन्ये
शब्द-आदीन् विषयान् इन्द्रिय-अग्निषु जुह्वति ।

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ ४-२७ ॥

सर्वाणि इन्द्रिय-कर्माणि प्राण-कर्माणि च अपरे ।
आत्म-संयम-योग-अग्नौ जुह्वति ज्ञान-दीपिते ॥ ४-२७ ॥

अपरे ज्ञान-दीपिते आत्म-संयम-योग-अग्नौ सर्वाणि
इन्द्रिय-कर्माणि प्राण-कर्माणि च जुह्वति ।

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ ४-२८ ॥

द्रव्य-यज्ञाः तपो-यज्ञाः योग-यज्ञाः तथा अपरे ।
स्वाध्याय-ज्ञान-यज्ञाः च यतयः संशितव्रताः ॥ ४-२८ ॥

अपरे संशितव्रताः द्रव्य-यज्ञाः तपो-यज्ञाः योग-यज्ञाः

तथा च स्वाध्याय-ज्ञान-यज्ञाः यतयः ( सन्ति) ।

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ ४-२९ ॥

अपाने जुह्वति प्राणम् प्राणे अपानम् तथा अपरे ।
प्राण-अपान-गती रुद्ध्वा प्राणायाम-परायणाः ॥ ४-२९ ॥

अपाने प्राणम् प्राणे अपानम् जुह्वति । ( तथा अपरे)
प्राण-अपान-गती रुद्ध्वा प्राणायाम-परायणाः ( सन्ति) ।

अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ४-३० ॥

अपरे नियत-आहाराः प्राणान् प्राणेषु जुह्वति ।
सर्वे अपि एते यज्ञविदः यज्ञ-क्षपित-कल्मषाः ॥ ४-३० ॥

अपरे नियत-आहाराः प्राणान् प्राणेषु जुह्वति । एते सर्वे अपि
यज्ञविदः यज्ञ-क्षपित-कल्मषाः ( सन्ति) ।

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ४-३१ ॥

यज्ञ-शिष्ट-अमृत-भुजः यान्ति ब्रह्म सनातनम् ।
नायम् लोकः अस्ति अयज्ञस्य कुतः अन्यः कुरुसत्तम ॥ ४-३१ ॥

हे कुरुसत्तम! यज्ञ-शिष्ट-अमृत-भुजः सनातनम् ब्रह्म यान्ति ।
अयज्ञस्य अयम् लोकः न अस्ति, कुतः अन्यः ?

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ४-३२ ॥

एवम् बहुविधाः यज्ञाः वितताः ब्रह्मणः मुखे ।
कर्मजान् विद्धि तान् सर्वान् एवम् ज्ञात्वा विमोक्ष्यसे ॥ ४-३२ ॥

एवम् बहुविधाः यज्ञाः ब्रह्मणः मुखे वितताः ( सन्ति, त्वं)

तान् सर्वान् कर्मजान् विद्धि । एवम् ज्ञात्वा ( त्वं) विमोक्ष्यसे ।

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ४-३३॥

श्रेयान् द्रव्यमयात् यज्ञात् ज्ञान-यज्ञः परन्तप ।
सर्वम् कर्म-अखिलम् पार्थ ज्ञाने परिसमाप्यते ॥ ४-३३॥

हे परन्तप! द्रव्यमयात् यज्ञात् ज्ञान-यज्ञः श्रेयान् ।
हे पार्थ! सर्वम् अखिलम् कर्म ज्ञाने परिसमाप्यते ।

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ४-३४॥

तत् विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानम् ज्ञानिनः तत्त्व-दर्शिनः ॥ ४-३४॥

प्रणिपातेन परिप्रश्नेन सेवया तत्त्व-दर्शिनः ज्ञानिनः
ज्ञानम् ते उपदेक्ष्यन्ति तत् ( त्वं) विद्धि ।

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषाण द्रक्ष्यस्यात्मन्यथो मयि ॥ ४-३५॥

यत् ज्ञात्वा न पुनः मोहम् एवम् यास्यसि पाण्डव ।
येन भूतानि अशेषाणि द्रक्ष्यसि आत्मनि अथो मयि ॥ ४-३५॥

हे पाण्डव! यत् ज्ञात्वा ( त्वं) पुनः एवम् मोहम्
न यास्यसि, येन भूतानि अशेषेण आत्मनि अथो मयि द्रक्ष्यसि ।

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ ४-३६॥

अपि चेत् असि पापेभ्यः सर्वेभ्यः पाप-कृत्तमः ।
सर्वम् ज्ञान-प्लवेन एव वृजिनम् सन्तरिष्यसि ॥ ४-३६॥

( त्वं) सर्वेभ्यः पापेभ्यः अपि पाप-कृत्तमः असि चेत् सर्वम्

वृजिनम् ज्ञान-प्लवेन एव सन्तरिष्यसि ।

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ४-३७॥

यथा एधांसि समिद्धः अग्निः भस्मसात् कुरुते अर्जुन ।
ज्ञान-अग्निः सर्व-कर्माणि भस्मसात् कुरुते तथा ॥ ४-३७॥

हे अर्जुन! यथा समिद्धः अग्निः एधांसि भस्मसात् कुरुते,
तथा ज्ञान-अग्निः सर्व-कर्माणि भस्मसात् कुरुते ।

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ४-३८॥

न हि ज्ञानेन सदृशम् पवित्रम् इह विद्यते ।
तत् स्वयं योग-संसिद्धः कालेन आत्मनि विन्दति ॥ ४-३८॥

हि इह ज्ञानेन सदृशम् पवित्रम् न विद्यते । तत् ( ज्ञानं)
स्वयं योग-संसिद्धः कालेन आत्मनि विन्दति ।

श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ४-३९॥

श्रद्धावान् लभते ज्ञानम् तत्परः संयत-इन्द्रियः ।
ज्ञानम् लब्ध्वा पराम् शान्तिम् अचिरेणाधिगच्छति ॥ ४-३९॥

श्रद्धावान्, तत्परः, संयत-इन्द्रियः ज्ञानम् लभते ।
ज्ञानम् लब्ध्वा अचिरेण पराम् शान्तिम् अधिगच्छति ।

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४-४०॥

अज्ञः च अश्रद्दधानः च संशय-आत्मा विनश्यति ।
न अयं लोकः अस्ति न परः न सुखं संशयात्मनः ॥ ४-४०॥

अज्ञः च अश्रद्दधानः च संशय-आत्मा विनश्यति ।

संशयात्मनः अयं लोकः न अस्ति, न परः ( लोकः) ,
न ( च) सुखं ( अस्ति) ।

योगसंन्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४-४१॥

योग-संन्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४-४१॥

हे धनञ्जय! योग-संन्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम्
आत्मवन्तं कर्माणि न निबध्नन्ति ।

तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४-४२॥

तस्मात् अज्ञान-सम्भूतम् हृत्स्थम् ज्ञान-असिना-आत्मनः ।
छित्त्वा एनम् संशयम् योगम् आतिष्ठ उत्तिष्ठ भारत ॥ ४-४२॥

हे भारत! तस्मात् अज्ञान-सम्भूतम् हृत्स्थम् आत्मनः
एनम् संशयम् ज्ञान-असिना छित्त्वा योगम् आतिष्ठ,
( युद्धाय च) उत्तिष्ठ ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
ज्ञानकर्मसंन्यासयोगो नाम चतुर्थोऽध्यायः ॥ ४॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
ज्ञान-कर्म-संन्यास-योगः नाम चतुर्थः अध्यायः ॥ ४॥

---

अथ पञ्चमोऽध्यायः । संन्यासयोगः ।
अथ पञ्चमः अध्यायः । संन्यास-योगः ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ ५-१॥

संन्यासम् कर्मणाम् कृष्ण पुनः योगम् च शंससि ।
यत् श्रेयः एतयोः एकम् तत् मे ब्रूहि सुनिश्चितम् ॥ ५-१॥

हे कृष्ण! कर्मणाम् संन्यासम्, पुनः योगम् च शंससि;
एतयोः यत् एकम् श्रेयः तत् मे सुनिश्चितम् ब्रूहि ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ ५-२॥

संन्यासः कर्म-योगः च निःश्रेयसकरौ उभौ ।
तयोः तु कर्म-संन्यासात् कर्म-योगः विशिष्यते ॥ ५-२॥

संन्यासः कर्म-योगः च उभौ निःश्रेयसकरौ;
तयोः तु कर्म-संन्यासात् कर्म-योगः विशिष्यते ।

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ५-३॥

ज्ञेयः सः नित्य-संन्यासी यः न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वः हि महाबाहो सुखम् बन्धात् प्रमुच्यते ॥ ५-३॥

यः न द्वेष्टि, न ( च) काङ्क्षति, सः नित्य-संन्यासी
ज्ञेयः; महाबाहो! हि निर्द्वन्द्वः बन्धात् सुखम् प्रमुच्यते ।

साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ५-४॥

साङ्ख्य-योगौ पृथक् बालाः प्रवदन्ति न पण्डिताः ।
एकम् अपि आस्थितः सम्यक् उभयोः विन्दते फलम् ॥ ५-४॥

साङ्ख्य-योगौ पृथक् ( इति) बालाः प्रवदन्ति, न पण्डिताः ।
एकम् अपि सम्यक् आस्थितः ( पुरुषः) उभयोः फलम् विन्दते ।

यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥ ५-५ ॥

यत् साङ्ख्यैः प्राप्यते स्थानम् तत् योगैः अपि गम्यते ।
एकम् साङ्ख्यम् च योगम् च यः पश्यति स पश्यति ॥ ५-५ ॥

यत् स्थानम् साङ्ख्यैः प्राप्यते, तत् योगैः अपि गम्यते;
यः साङ्ख्यम् च योगम् च एकम् पश्यति, स ( एव) पश्यति ।

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ५-६ ॥

संन्यासः तु महाबाहो दुःखम् आप्तुम् अयोगतः ।
योग-युक्तः मुनिः ब्रह्म नचिरेण अधिगच्छति ॥ ५-६ ॥

हे महाबाहो! अयोगतः संन्यासः तु दुःखम् आप्तुम्,
योग-युक्तः मुनिः न चिरेण ब्रह्म अधिगच्छति ।

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ५-७ ॥

योग-युक्तः विशुद्ध-आत्मा विजित-आत्मा जित-इन्द्रियः ।
सर्व-भूत-आत्म-भूत-आत्मा कुर्वन् अपि न लिप्यते ॥ ५-७ ॥

योग-युक्तः, विशुद्ध-आत्मा, विजित-आत्मा, जित-इन्द्रियः,
सर्व-भूत-आत्म-भूत-आत्मा, कुर्वन् अपि न लिप्यते ।

नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ५-८ ॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ५-९ ॥

न एव किञ्चित् करोमि इति युक्तः मन्येत तत्त्ववित् ।

पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपञ् श्वसन् ॥ ५-८॥
प्रलपन् विसृजन् गृह्णन् उन्मिषन् निमिषन् अपि ।
इन्द्रियाणि इन्द्रिय-अर्थेषु वर्तन्ते इति धारयन् ॥ ५-९॥

युक्तः तत्त्ववित् पश्यन्, शृण्वन्, स्पृशन्, जिघ्रन्, अश्नन्,
गच्छन्, स्वपन्, श्वसन्, प्रलपन्, विसृजन्, गृह्णन्,
उन्मिषन् निमिषन् अपि, इन्द्रियाणि इन्द्रिय-अर्थेषु वर्तन्ते इति धारयन्
किञ्चित् न एव करोमि इति मन्येत ।

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ५-१०॥

ब्रह्मणि आधाय कर्माणि सङ्गम् त्यक्त्वा करोति यः ।
लिप्यते न सः पापेन पद्म-पत्रम् इव अम्भसा ॥ ५-१०॥

यः सङ्गम् त्यक्त्वा कर्माणि, ब्रह्मणि आधाय करोति, सः
पद्म-पत्रम् अम्भसा इव, पापेन न लिप्यते ।

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥ ५-११॥

कायेन मनसा बुद्ध्या केवलैः इन्द्रियैः अपि ।
योगिनः कर्म कुर्वन्ति सङ्गम् त्यक्त्वा आत्म-शुद्धये ॥ ५-११॥

योगिनः आत्म-शुद्धये कायेन, मनसा, बुद्ध्या, केवलैः
इन्द्रियैः अपि सङ्गम् त्यक्त्वा कर्म कुर्वन्ति ।

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ ५-१२॥

युक्तः कर्म-फलं त्यक्त्वा शान्तिम् आप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तः निबध्यते ॥ ५-१२॥

युक्तः कर्म-फलं त्यक्त्वा नैष्ठिकीम् शान्तिम् आप्नोति ।
अयुक्तः कामकारेण फले सक्तः निबध्यते ।

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ ५-१३ ॥

सर्व-कर्माणि मनसा संन्यस्य आस्ते सुखम् वशी ।
नव-द्वारे पुरे देही न एव कुर्वन् न कारयन् ॥ ५-१३ ॥

वशी देही सर्व-कर्माणि मनसा संन्यस्य, नव-द्वारे पुरे,
न एव कुर्वन्, न कारयन् सुखम् आस्ते ।

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ ५-१४ ॥

न कर्तृत्वम् न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्म-फल-संयोगम् स्वभावः तु प्रवर्तते ॥ ५-१४ ॥

प्रभुः लोकस्य न कर्तृत्वम्, न कर्माणि, न कर्म-फल-संयोगम्
सृजति । स्वभावः तु प्रवर्तते ।

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ ५-१५ ॥

न आदत्ते कस्यचित् पापं न च एव सुकृतं विभुः ।
अज्ञानेन आवृतम् ज्ञानम् तेन मुह्यन्ति जन्तवः ॥ ५-१५ ॥

विभुः न कस्यचित् पापं, न च एव सुकृतं आदत्ते ।
अज्ञानेन ज्ञानम् आवृतम्, तेन जन्तवः मुह्यन्ति ।

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ ५-१६ ॥

ज्ञानेन तु तत् अज्ञानम् येषाम् नाशितम् आत्मनः ।
तेषाम् आदित्यवत् ज्ञानम् प्रकाशयति तत् परम् ॥ ५-१६ ॥

येषाम् तु तत् अज्ञानम् आत्मनः ज्ञानेन नाशितम्, तेषाम्
ज्ञानम् आदित्यवत् तत् परम् प्रकाशयति ।

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ ५-१७ ॥

तत् बुद्धयः तत् आत्मानः तत् निष्ठाः तत् परायणाः ।
गच्छन्ति अपुनरावृत्तिम् ज्ञान-निर्धूत-कल्मषाः ॥ ५-१७ ॥

तत् बुद्धयः, तत् आत्मानः, तत् निष्ठाः, तत् परायणाः,
ज्ञान-निर्धूत-कल्मषाः अपुनरावृत्तिम् गच्छन्ति ।

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ ५-१८ ॥

विद्या-विनय-सम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि च एव श्वपाके च पण्डिताः सम-दर्शिनः ॥ ५-१८ ॥

पण्डिताः विद्या-विनय-सम्पन्ने ब्राह्मणे, गवि, हस्तिनि, शुनि, च
श्वपाके च एव सम-दर्शिनः ( सन्ति) ।

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ॥ ५-१९ ॥

इह एव तैः जितः सर्गः येषाम् साम्ये स्थितम् मनः ।
निर्दोषम् हि समम् ब्रह्म तस्मात् ब्रह्मणि ते स्थिताः ॥ ५-१९ ॥

येषाम् मनः साम्ये स्थितम्, तैः इह एव सर्गः जितः,
ब्रह्म हि समम् निर्दोषम्, तस्मात् ते ब्रह्मणि स्थिताः ।

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसम्मूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥ ५-२० ॥

न प्रहृष्येत् प्रियम् प्राप्य न उद्विजेत् प्राप्य च अप्रियम् ।
स्थिर-बुद्धिः असम्मूढः ब्रह्मवित् ब्रह्मणि स्थितः ॥ ५-२० ॥

प्रियम् प्राप्य न प्रहृष्येत्, अप्रियम् प्राप्य च न उद्विजेत्,
( एवं) स्थिर-बुद्धिः, असम्मूढः, ब्रह्मवित् ब्रह्मणि स्थितः ।

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ ५-२१॥

बाह्य-स्पर्शेषु असक्त-आत्मा विन्दति आत्मनि यत् सुखम् ।
सः ब्रह्म-योग-युक्तात्मा सुखम् अक्षयम् अश्नुते ॥ ५-२१॥

बाह्य-स्पर्शेषु असक्त-आत्मा, आत्मनि यत् सुखम् विन्दति,
सः ब्रह्म-योग-युक्तात्मा अक्षयम् सुखम् अश्नुते ।

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ ५-२२॥

ये हि संस्पर्शजाः भोगाः दुःख-योनयः एव ते ।
आदि अन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ ५-२२॥

हे कौन्तेय! ये हि संस्पर्शजाः भोगाः ते दुःख-योनयः
आदि अन्तवन्तः एव, तेषु बुधः न रमते ।

शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ ५-२३॥

शक्नोति इह एव यः सोढुम् प्राक् शरीर-विमोक्षणात् ।
काम-क्रोध-उद्भवम् वेगम् सः युक्तः सः सुखी नरः ॥ ५-२३॥

इह एव शरीर-विमोक्षणात् प्राक्, यः काम-क्रोध-उद्भवम्
वेगम् सोढुम् शक्नोति, सः नरः युक्तः, सः सुखी ( भवति) ।

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ ५-२४॥

यः अन्तः-सुखः अन्तर-आरामः तथा अन्तर्-ज्योतिः एव यः ।
सः योगी ब्रह्म-निर्वाणम् ब्रह्म-भूतः अधिगच्छति ॥ ५-२४॥

यः अन्तः-सुखः, अन्तर-आरामः, तथा यः अन्तर्-ज्योतिः एव,
सः योगी ब्रह्म-भूतः ब्रह्म-निर्वाणम् अधिगच्छति ।

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ ५-२५ ॥

लभन्ते ब्रह्म-निर्वाणम् ऋषयः क्षीण-कल्मषाः ।
छिन्न-द्वैधाः यत-आत्मानः सर्व-भूतहिते रताः ॥ ५-२५ ॥

क्षीण-कल्मषाः, छिन्न-द्वैधाः, यत-आत्मानः,
सर्व-भूतहिते रताः ऋषयः ब्रह्म-निर्वाणम् लभन्ते ।

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ ५-२६ ॥

काम-क्रोध-वियुक्तानाम् यतीनाम् यत-चेतसाम् ।
अभितः ब्रह्म-निर्वाणं वर्तते विदित-आत्मनाम् ॥ ५-२६ ॥

काम- क्रोध-वियुक्तानाम् यत-चेतसाम् विदित-आत्मनाम्
यतीनाम् अभितः ब्रह्म-निर्वाणं वर्तते ।

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ ५-२७ ॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ ५-२८ ॥

स्पर्शान् कृत्वा बहिः बाह्यान् चक्षुः च एव अन्तरे भ्रुवोः ।
प्राण-अपानौ समौ कृत्वा नास-अभ्यन्तर-चारिणौ ॥ ५-२७ ॥
यत-इन्द्रिय-मनः बुद्धिः मुनिः मोक्ष-परायणः ।
विगत-इच्छा-भय-क्रोधः यः सदा मुक्तः एव सः ॥ ५-२८ ॥

यः मुनिः बाह्यान् स्पर्शान् बहिः कृत्वा, चक्षुः च एव
भ्रुवोः अन्तरे कृत्वा, प्राण-अपानौ नास-अभ्यन्तर-चारिणौ
समौ ( कृत्वा) , यत-इन्द्रिय-मनः बुद्धिः, विगत-इच्छा-भय-क्रोधः,
मोक्ष-परायणः ( स्यात्) सः सदा मुक्तः एव ।

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ ५-२९ ॥

भोक्तारम् यज्ञ-तपसाम् सर्व-लोक-महेश्वरम् ।
सुहृदम् सर्व-भूतानाम् ज्ञात्वा मा ाम् शान्तिम् ऋच्छति ॥ ५-२९ ॥

यज्ञ-तपसाम् भोक्तारम् सर्व-भूतानाम् सुहृदम्
सर्व-लोक-महेश्वरम् माम् ज्ञात्वा शान्तिम् ऋच्छति ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
संन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
संन्यास-योगः नाम पञ्चमः अध्यायः ॥ ५ ॥

---

अथ षष्ठोऽध्यायः । आत्मसंयमयोगः ।
अथ षष्ठः अध्यायः । आत्म-संयम-योगः ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ ६-१ ॥

अनाश्रितः कर्म-फलम् कार्यम् कर्म करोति यः ।
सः संन्यासी च योगी च न निरग्निः न च अक्रियः ॥ ६-१ ॥

यः कर्म-फलम् अनाश्रितः कार्यम् कर्म करोति,
सः संन्यासी च योगी च, निरग्निः न अक्रियः च न ।

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ॥ ६-२ ॥

यम् संन्यासम् इति प्राहुः योगम् तम् विद्धि पाण्डव ।
न हि असंन्यस्त-सङ्कल्पः योगी भवति कश्चन ॥ ६-२ ॥

हे पाण्डव! यम् संन्यासम् इति प्राहुः तम् योगम् विद्धि,

कश्चन असंन्यस्त-सङ्कल्पः योगी न भवति हि ।

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ६-३॥

आरुरुक्षोः मुनेः योगम् कर्म कारणम् उच्यते ।
योग-आरूढस्य तस्य एव शमः कारणम् उच्यते ॥ ६-३॥

योगम् आरुरुक्षोः मुनेः कर्म कारणम् उच्यते,
योग-आरूढस्य तस्य एव शमः कारणम् उच्यते ।

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥ ६-४॥

यदा हि न इन्द्रिय-अर्थेषु न कर्मसु अनुषज्जते ।
सर्व-सङ्कल्प-संन्यासी योग-आरूढः तदा उच्यते ॥ ६-४॥

यदा हि न इन्द्रिय-अर्थेषु न कर्मसु अनुषज्जते, तदा
सर्व-सङ्कल्प-संन्यासी योग-आरूढः उच्यते ।

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ६-५॥

उद्धरेत् आत्मना आत्मानम् न आत्मानम् अवसादयेत् ।
आत्मा एव हि आत्मनः बन्धुः आत्मा एव रिपुः आत्मनः ॥ ६-५॥

आत्मना आत्मानम् उद्धरेत्, आत्मानम् न अवसादयेत् ।
आत्मा एव हि आत्मनः बन्धुः, आत्मा एव आत्मनः रिपुः ।

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६-६॥

बन्धुः आत्मा आत्मनः तस्य येन आत्मा एव आत्मना जितः ।
अनात्मनः तु शत्रुत्वे वर्तेत आत्मा एव शत्रुवत् ॥ ६-६॥

येन आत्मना एव आत्मा जितः, तस्य आत्मनः बन्धुः आत्मा,

अनात्मनः तु शत्रुत्वे आत्मा एव शत्रुवत् वर्तेत ।

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ६-७॥

जित-आत्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीत-उष्ण-सुख-दुःखेषु तथा मान-अपमानयोः ॥ ६-७॥

जित-आत्मनः प्रशान्तस्य परम-आत्मा शीत-उष्ण-सुख-दुःखेषु
तथा मान-अपमानयोः समाहितः ( भवति) ।

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ६-८॥

ज्ञान-विज्ञान-तृप्त-आत्मा कूटस्थः विजित-इन्द्रियः ।
युक्तः इति उच्यते योगी सम-लोष्ट-अश्म-काञ्चनः ॥ ६-८॥

ज्ञान-विज्ञान-तृप्त-आत्मा कूटस्थः विजित-इन्द्रियः
सम-लोष्ट-अश्म-काञ्चनः योगी युक्तः इति उच्यते ।

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ६-९॥

सुहृत् मित्र-अरि-उदासीन-मध्यस्थ-द्वेष्य-बन्धुषु ।
साधुषु अपि च पापेषु सम-बुद्धिः विशिष्यते ॥ ६-९॥

सुहृत् मित्र-अरि-उदासीन-मध्यस्थ-द्वेष्य-बन्धुषु साधुषु
अपि च पापेषु सम-बुद्धिः विशिष्यते ।

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ ६-१०॥

योगी युञ्जीत सततम् आत्मानम् रहसि स्थितः ।
एकाकी यत-चित्त-आत्मा निराशीः अपरिग्रहः ॥ ६-१०॥

योगी रहसि स्थितः एकाकी, यत-चित्त-आत्मा, निराशीः,

अपरिग्रहः ( च सन्) सततम् आत्मानम् युञ्जीत ।

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ६-११॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ ६-१२॥

शुचौ देशे प्रतिष्ठाप्य स्थिरम् आसनम् आत्मनः ।
न अति-उच्छ्रितम् न अति-नीचम् चैल-अजिन-कुश-उत्तरम् ॥ ६-११॥
तत्र एकाग्रम् मनः कृत्वा यत-चित्त-इन्द्रिय-क्रियः ।
उपविश्य आसने युञ्ज्यात् योगम् आत्म-विशुद्धये ॥ ६-१२॥

शुचौ देशे, न अति-उच्छ्रितम्, न अति-नीचम्, चैल-अजिन-कुश-उत्तरम्,
आत्मनः स्थिरम् आसनम् प्रतिष्ठाप्य तत्र आसने उपविश्य
मनः एकाग्रम् कृत्वा, यत-चित्त-इन्द्रिय-क्रियः ( सन्)
आत्म-विशुद्धये योगम् युञ्ज्यात् ।

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ ६-१३॥
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ ६-१४॥

समम् काय-शिरः-ग्रीवम् धारयन् अचलम् स्थिरः ।
सम्प्रेक्ष्य नासिक-अग्रं स्वम् दिशः च अनवलोकयन् ॥ ६-१३॥
प्रशान्त-आत्मा विगत-भीः ब्रह्मचारि-व्रते स्थितः ।
मनः संयम्य मत्-चित्तः युक्तः आसीत मत्-परः ॥ ६-१४॥

स्थिरः ( भूत्वा) काय-शिरः-ग्रीवम् अचलम् समम् धारयन्
स्वम् नासिक-अग्रं सम्प्रेक्ष्य, च दिशः अनवलोकयन् प्रशान्त-आत्मा
विगत-भीः ब्रह्मचारि-व्रते स्थितः, मनः संयम्य, मत्-चित्तः मत्-परः युक्तः आसीत ।

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ ६-१५॥

युञ्जन् एवं सदा आत्मानम् योगी नियत-मानसः ।
शान्तिम् निर्वाण-परमाम् मत्-संस्थाम् अधिगच्छति ॥ ६-१५॥

एवं सदा आत्मानम् युञ्जन्, नियत-मानसः योगी
निर्वाण-परमाम् मत्-संस्थाम् शान्तिम् अधिगच्छति ।

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ ६-१६ ॥

न अति अश्नतः तु योगः अस्ति न च एकान्तम् अनश्नतः ।
न च अति-स्वप्न-शीलस्य जाग्रतः न एव च अर्जुन ॥ ६-१६ ॥

हे अर्जुन! अति अश्नतः तु न योगः अस्ति, एकान्तम् अनश्नतः च न,
अति-स्वप्न-शीलस्य च न, जाग्रतः च न एव ।

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ ६-१७ ॥

युक्त-आहार-विहारस्य युक्त-चेष्टस्य कर्मसु ।
युक्त-स्वप्न-अवबोधस्य योगः भवति दुःखहा ॥ ६-१७ ॥

युक्त-आहार-विहारस्य, कर्मसु युक्त-चेष्टस्य,
युक्त-स्वप्न-अवबोधस्य योगः दुःखहा भवति ।

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ ६-१८ ॥

यदा विनियतम् चित्तम् आत्मनि एव अवतिष्ठते ।
निःस्पृहः सर्व-कामेभ्यः युक्तः इति उच्यते तदा ॥ ६-१८ ॥

यदा विनियतम् चित्तम् आत्मनि एव अवतिष्ठते,
सर्व-कामेभ्यः निःस्पृहः तदा युक्तः इति उच्यते ।

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ ६-१९ ॥

यथा दीपः निवातस्थः नेङ्गते सोपमा स्मृता ।
योगिनः यत-चित्तस्य युञ्जतः योगम् आत्मनः ॥ ६-१९ ॥

यथा निवातस्थः दीपः न इङ्गते सा उपमा, आत्मनः योगम्
युञ्जतः यत-चित्तस्य योगिनः, स्मृता ।

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ ६-२०॥
सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ ६-२१॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ ६-२२॥
तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ ६-२३॥

यत्र उपरमते चित्तम् निरुद्धम् योग-सेवया ।
यत्र च एव आत्मना आत्मानम् पश्यन् आत्मनि तुष्यति ॥ ६-२०॥
सुखम् आत्यन्तिकम् यत् तत् बुद्धि-ग्राह्यम्-अतीन्द्रियम् ।
वेत्ति यत्र न च एव अयम् स्थितः चलति तत्त्वतः ॥ ६-२१॥
यम् लब्ध्वा च अपरम् लाभम् मन्यते न अधिकम् ततः ।
यस्मिन् स्थितः न दुःखेन गुरुणा अपि विचाल्यते ॥ ६-२२॥
तम् विद्यात् दुःख-संयोग-वियोगम् योग-संज्ञितम् ।
सः निश्चयेन योक्तव्यः योगः अनिर्विण्ण-चेतसा ॥ ६-२३॥

योग-सेवया निरुद्धम् चित्तम् यत्र उपरमते,
च एव यत्र आत्मना आत्मानम् पश्यन् आत्मनि तुष्यति,
यत्र यत् तत् बुद्धि-ग्राह्यम्-अतीन्द्रियम् आत्यन्तिकम्
सुखम् वेत्ति, ( यत्र) च स्थितः अयम् तत्त्वतः न एव चलति,
यम् च लब्ध्वा, ततः अधिकम् अपरम् लाभम् न मन्यते,
यस्मिन् स्थितः गुरुणा अपि दुःखेन न विचाल्यते,
तम् दुःख-संयोग-वियोगम् योग-संज्ञितम् विद्यात्,
सः योगः अनिर्विण्ण-चेतसा निश्चयेन योक्तव्यः ।

सङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ ६-२४॥

सङ्कल्प-प्रभवान् कामान् त्यक्त्वा सर्वान् अशेषतः ।
मनसा एव इन्द्रिय-ग्रामम् विनियम्य समन्ततः ॥ ६-२४॥

सङ्कल्प-प्रभवान् सर्वान् कामान् अशेषतः त्यक्त्वा,
मनसा एव इन्द्रिय-ग्रामम् समन्ततः विनियम्य,

शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ ६-२५ ॥

शनैः शनैः उपरमेत् बुद्ध्या धृति-गृहीतया ।
आत्म-संस्थम् मनः कृत्वा न किञ्चित् अपि चिन्तयेत् ॥ ६-२५ ॥

धृति-गृहीतया बुद्ध्या शनैः शनैः उपरमेत्, मनः
आत्म-संस्थम् कृत्वा, किञ्चित् अपि न चिन्तयेत् ।

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ ६-२६ ॥

यतः यतः निश्चरति मनः चञ्चलम् अस्थिरम् ।
ततः ततः नियम्य एतत् आत्मनि एव वशं नयेत् ॥ ६-२६ ॥

चञ्चलम् अस्थिरम् मनः यतः यतः निश्चरति, ततः ततः
एतत् नियम्य आत्मनि एव वशं नयेत् ।

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ ६-२७ ॥

प्रशान्त-मनसम् हि एनम् योगिनम् सुखम् उत्तमम् ।
उपैति शान्त-रजसम् ब्रह्म-भूतम् अकल्मषम् ॥ ६-२७ ॥

प्रशान्त-मनसम् शान्त-रजसम् अकल्मषम् ब्रह्म-भूतम्
एनम् योगिनम् हि उत्तमम् सुखम् उपैति ।

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ ६-२८ ॥

युञ्जन् एवम् सदा आत्मानम् योगी विगत-कल्मषः ।
सुखेन ब्रह्म-संस्पर्शम् अत्यन्तम् सुखम् अश्नुते ॥ ६-२८ ॥

एवम् सदा आत्मानम् युञ्जन् योगी विगत-कल्मषः
ब्रह्म-संस्पर्शम् अत्यन्तम् सुखम् सुखेन अश्नुते ।
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ ६-२९ ॥

सर्व-भूतस्थम् आत्मानम् सर्व-भूतानि च आत्मनि ।
ईक्षते योग-युक्त-आत्मा सर्वत्र सम-दर्शनः ॥ ६-२९ ॥

योग-युक्त-आत्मा सर्वत्र सम-दर्शनः, आत्मानम्
सर्व-भूतस्थम् सर्व-भूतानि च आत्मनि ईक्षते ।

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ६-३० ॥

यो माम् पश्यति सर्वत्र सर्वम् च मयि पश्यति ।
तस्य अहं न प्रणश्यामि सः च मे न प्रणश्यति ॥ ६-३० ॥

यः माम् सर्वत्र पश्यति, सर्वम् च मयि पश्यति,
तस्य अहं न प्रणश्यामि, सः च मे न प्रणश्यति ।

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ६-३१ ॥

सर्व-भूत-स्थितम् यः माम् भजति एकत्वम् आस्थितः ।
सर्वथा वर्तमानः अपि सः योगी मयि वर्तते ॥ ६-३१ ॥

यः एकत्वम् आस्थितः सर्व-भूत-स्थितम् माम् भजति,
सः योगी सर्वथा वर्तमानः अपि, मयि वर्तते ।

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ६-३२ ॥

आत्मा-उपम्येन सर्वत्र समम् पश्यति यः अर्जुन ।
सुखम् वा यदि वा दुःखम् सः योगी परमः मतः ॥ ६-३२ ॥

हे अर्जुन! यः आत्मा-उपम्येन सर्वत्र सुखम् वा यदि वा दुःखम्
समम् पश्यति, सः योगी परमः मतः ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥ ६-३३॥

यः अयं योगः त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्य अहं न पश्यामि चञ्चलत्वात् स्थितिम् स्थिराम् ॥ ६-३३

हे मधुसूदन! यः अयं योगः त्वया साम्येन प्रोक्तः, एतस्य
स्थिराम् स्थितिम् चञ्चलत्वात् अहं न पश्यामि ।

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ६-३४॥

चञ्चलम् हि मनः कृष्ण प्रमाथि बलवत् दृढम् ।
तस्य अहम् निग्रहम् मन्ये वायोः इव सुदुष्करम् ॥ ६-३४॥

हे कृष्ण! मनः बलवत् दृढम् चञ्चलम् प्रमाथि,
अहम् हि तस्य निग्रहम् वायोः इव, सुदुष्करम् मन्ये ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ६-३५॥

असंशयम् महाबाहो मनः दुर्निग्रहम् चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ६-३५॥

हे महाबाहो! मनः असंशयम् चलम् दुर्निग्रहम्,
हे कौन्तेय! ( तत्) तु अभ्यासेन वैराग्येण च गृह्यते ।

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ६-३६ ॥

असंयत-आत्मना योगः दुष्प्रापः इति मे मतिः ।
वश्य-आत्मना तु यतता शक्यः अवाप्तुम् उपायतः ॥ ६-३६ ॥

असंयत-आत्मना योगः दुष्प्रापः, वश्य-आत्मना यतता
तु उपायतः अवाप्तुम् शक्यः, इति मे मतिः ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ६-३७ ॥

अयतिः श्रद्धया उपेतः योगात् चलित-मानसः ।
अप्राप्य योग-संसिद्धिम् काम् गतिम् कृष्ण गच्छति ॥ ६-३७ ॥

हे कृष्ण! श्रद्धया उपेतः अयतिः, योगात् चलित-मानसः,
योग-संसिद्धिम् अप्राप्य, काम् गतिम् गच्छति?

कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ६-३८ ॥

कच्चित् न उभय-विभ्रष्टः छिन्न-अभ्रम् इव नश्यति ।
अप्रतिष्ठः महाबाहो विमूढः ब्रह्मणः पथि ॥ ६-३८ ॥

हे महाबाहो! ब्रह्मणः पथि अप्रतिष्ठः विमूढः उभय-विभ्रष्टः
छिन्न-अभ्रम् इव न नश्यति कच्चित्?

एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ६-३९ ॥

एतत् मे संशयम् कृष्ण छेत्तुम् अर्हसि अशेषतः ।
त्वत् अन्यः संशयस्य अस्य छेत्ता न हि उपपद्यते ॥ ६-३९ ॥

हे कृष्ण! मे एतत् संशयम् अशेषतः छेत्तुम् अर्हसि;
हि त्वत् अन्यः अस्य संशयस्य छेत्ता न उपपद्यते ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति ॥ ६-४०॥

पार्थ न एव इह न अमुत्र विनाशः तस्य विद्यते ।
न हि कल्याण-कृत् कश्चित् दुर्गतिम् तात गच्छति ॥ ६-४०॥

हे पार्थ! न इह न एव ( च) अमुत्र तस्य विनाशः विद्यते ।
हे तात! हि कश्चित् कल्याण-कृत् दुर्गतिम् न गच्छति ।

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ६-४१॥

प्राप्य पुण्य-कृताम् लोकान् उषित्वा शाश्वतीः समाः ।
शुचीनाम् श्रीमताम् गेहे योग-भ्रष्टः अभिजायते ॥ ६-४१॥

योग-भ्रष्टः पुण्य-कृताम् लोकान् प्राप्य, ( तत्र)
शाश्वतीः समाः उषित्वा, शुचीनाम् श्रीमताम् गेहे अभिजायते ।

अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ६-४२॥

अथवा योगिनाम् एव कुले भवति धीमताम् ।
एतत् हि दुर्लभतरं लोके जन्म यत् ईदृशम् ॥ ६-४२॥

अथवा धीमताम् योगिनाम् एव कुले भवति, यत् एतत्
ईदृशम् जन्म लोके दुर्लभतरं हि ।

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ६-४३॥

तत्र तम् बुद्धि-संयोगम् लभते पौर्व-देहिकम् ।
यतते च ततः भूयः संसिद्धौ कुरुनन्दन ॥ ६-४३॥

हे कुरुनन्दन! ( सः) तत्र तम् पौर्व-देहिकम् बुद्धि-संयोगम्
लभते, ततः च भूयः संसिद्धौ यतते ।

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ६-४४॥

पूर्व-अभ्यासेन तेन एव ह्रियते हि अवशः अपि सः ।
जिज्ञासुः अपि योगस्य शब्द-ब्रह्म अतिवर्तते ॥ ६-४४॥

तेन एव पूर्व-अभ्यासेन सः अवशः अपि ह्रियते, हि
योगस्य जिज्ञासुः अपि शब्द-ब्रह्म अतिवर्तते ।

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ६-४५॥

प्रयत्नात् यतमानः तु योगी संशुद्ध-किल्बिषः ।
अनेक-जन्म-संसिद्धः ततः याति पराम् गतिम् ॥ ६-४५॥

ततः प्रयत्नात् यतमानः संशुद्ध-किल्बिषः योगी तु
अनेक-जन्म-संसिद्धः पराम् गतिम् याति ।

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ६-४६॥

तपस्विभ्यः अधिकः योगी ज्ञानिभ्यः अपि मतः अधिकः ।
कर्मिभ्यः च अधिकः योगी तस्मात् योगी भव अर्जुन ॥ ६-४६॥

योगी तपस्विभ्यः अधिकः, ज्ञानिभ्यः अपि च अधिकः मतः,
योगी कर्मिभ्यः ( च) अधिकः, तस्मात् हे अर्जुन!
( त्वं) योगी भव ।

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ६-४७॥

योगिनाम् अपि सर्वेषाम् मत् गतेन अन्तर-आत्मना ।
श्रद्धावान् भजते यः माम् सः मे युक्ततमः मतः ॥ ६-४७॥

सर्वेषाम् अपि योगिनाम् यः श्रद्धावान्, मत् गतेन
अन्तर-आत्मना माम् भजते, सः मे युक्ततमः मतः ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
आत्मसंयमयोगो नाम षष्ठोऽध्यायः ॥ ६॥
ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
आत्म-संयम-योगः नाम षष्ठः अध्यायः ॥ ६॥

---

अथ सप्तमोऽध्यायः । ज्ञानविज्ञानयोगः ।
अथ सप्तमः अध्यायः । ज्ञान-विज्ञान-योगः ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ ७-१॥

मयि आसक्त-मनाः पार्थ योगम् युञ्जन् मत् आश्रयः ।
असंशयम् समग्रम् माम् यथा ज्ञास्यसि तत् शृणु ॥ ७-१॥

हे पार्थ! मयि आसक्त-मनाः मत् आश्रयः ( त्वं) योगम्
युञ्जन्, माम् समग्रम् यथा असंशयम् ज्ञास्यसि, तत् शृणु ।

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ ७-२॥

ज्ञानम् ते अहम् सविज्ञानम् इदम् वक्ष्यामि अशेषतः ।
यत् ज्ञात्वा न इह भूयः अन्यत् ज्ञातव्यम् अवशिष्यते ॥ ७-२॥

अहम् इदम् सविज्ञानम् ज्ञानम् ते अशेषतः वक्ष्यामि;

यत् ज्ञात्वा इह भूयः अन्यत् ज्ञातव्यम् न अवशिष्यते ।

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ७-३ ॥

मनुष्याणाम् सहस्रेषु कश्चित् यतति सिद्धये ।
यतताम् अपि सिद्धानाम् कश्चित् माम् वेत्ति तत्त्वतः ॥ ७-३ ॥

मनुष्याणाम् सहस्रेषु कश्चित् सिद्धये यतति;
यतताम् सिद्धानाम् अपि कश्चित् माम् तत्त्वतः वेत्ति ।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ७-४ ॥

भूमिः आपः अनलः वायुः खम् मनः बुद्धिः एव च ।
अहंकारः इति इयम् मे भिन्ना प्रकृतिः अष्टधा ॥ ७-४ ॥

भूमिः, आपः, अनलः, वायुः, खम्, मनः, बुद्धिः एव च
अहंकारः इति अष्टधा भिन्ना मे इयम् प्रकृतिः ।

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ७-५ ॥

अपरा इयम् इतः तु अन्याम् प्रकृतिम् विद्धि मे पराम् ।
जीव-भूताम् महाबाहो यया इदम् धार्यते जगत् ॥ ७-५ ॥

हे महाबाहो! इयम् अपरा ( प्रकृतिः अस्ति) इतः तु अन्याम्
जीव-भूताम् मे पराम् प्रकृतिम् विद्धि, यया इदम् जगत् धार्यते ।

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ७-६ ॥

एतत् योनीनि भूतानि सर्वाणि इति उपधारय ।
अहम् कृत्स्नस्य जगतः प्रभवः प्रलयः तथा ॥ ७-६ ॥

सर्वाणि भूतानि एतत् योनीनि इति, उपधारय । अहम् कृत्स्नस्य

जगतः प्रभवः तथा प्रलयः ( अस्मि) ।

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७-७॥

मत्तः परतरं न अन्यत् किञ्चित् अस्ति धनञ्जय ।
मयि सर्वम् इदम् प्रोतम् सूत्रे मणिगणाः इव ॥ ७-७॥

हे धनञ्जय! मत्तः परतरं अन्यत् किञ्चित् न अस्ति ।
सूत्रे मणिगणाः इव इदम् सर्वम् मयि प्रोतम् ।

रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ७-८॥

रसः अहम् अप्सु कौन्तेय प्रभा अस्मि शशि-सूर्ययोः ।
प्रणवः सर्व-वेदेषु शब्दः खे पौरुषम् नृषु ॥ ७-८॥

हे कौन्तेय! अहम् अप्सु रसः, शशि-सूर्ययोः प्रभा,
सर्व-वेदेषु प्रणवः, खे शब्दः, नृषु पौरुषम् अस्मि ।

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ७-९॥

पुण्यः गन्धः पृथिव्याम् च तेजः च अस्मि विभावसौ ।
जीवनम् सर्व-भूतेषु तपः च अस्मि तपस्विषु ॥ ७-९॥

च पृथिव्याम् पुण्यः गन्धः, विभावसौ च तेजः अस्मि;
सर्व-भूतेषु जीवनम्, तपस्विषु च तपः अस्मि ।

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ ७-१०॥

बीजम् माम् सर्व-भूतानाम् विद्धि पार्थ सनातनम् ।
बुद्धिः बुद्धिमताम् अस्मि तेजः तेजस्विनाम् अहम् ॥ ७-१०॥

हे पार्थ! माम् सर्व-भूतानाम् सनातनम् बीजम् विद्धि,

अहम् बुद्धिमताम् बुद्धिः अस्मि, तेजस्विनाम् तेजः ।

बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ७-११॥

बलम् बलवताम् च अहम् काम-राग-विवर्जितम् ।
धर्म-अविरुद्धः भूतेषु कामः अस्मि भरतर्षभ ॥ ७-११-

अहम् च बलवताम् काम-राग-विवर्जितम् बलम् अस्मि,
हे भरतर्षभ! भूतेषु धर्म-अविरुद्धः कामः ( अहम् अस्मि) ।

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ ७-१२॥

ये च एव सात्त्विकाः भावाः राजसाः तामसाः च ये ।
मत्तः एव इति तान् विद्धि न तु अहं तेषु ते मयि ॥ ७-१२॥

ये च एव सात्त्विकाः राजसाः तामसाः च भावाः, ते
मत्तः एव इति तान् विद्धि, अहं तेषु न ( अस्मि) , तु ते मयि ( वर्तन्ते) ।

त्रिभिः गुणमयैः भावैः एभिः सर्वम्म् इदम् जगत् ।
मोहितम् न अभिजानाति माम् एभ्यः परम् अव्ययम् ॥ ७-१३॥

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ ७-१३॥

एभिः त्रिभिः गुणमयैः भावैः इदम् सर्वम्म् जगत् मोहितम्,
( अतः) एभ्यः परम् अव्ययम् माम् न अभिजानाति ।

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ ७-१४॥

दैवी हि एषा गुणमयी मम माया दुरत्यया ।
माम् एव ये प्रपद्यन्ते मायाम् एताम् तरन्ति ते ॥ ७-१४॥

एषा दैवी गुणमयी मम माया हि दुरत्यया । ये माम् एव

प्रपद्यन्ते, ते एताम् मायाम् तरन्ति ।

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ ७-१५ ॥

न माम् दुष्कृतिनः मूढाः प्रपद्यन्ते नर-अधमाः ।
मायया अपहृत-ज्ञानाः आसुरम् भावम् आश्रिताः ॥ ७-१५ ॥

मायया अपहृत-ज्ञानाः आसुरम् भावम् आश्रिताः
दुष्कृतिनः मूढाः नर-अधमाः माम् न प्रपद्यन्ते ।

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ ७-१६ ॥

चतुः-विधाः भजन्ते माम् जनाः सुकृतिनः अर्जुन ।
आर्तः जिज्ञासुः अर्थार्थी ज्ञानी च भरतर्षभ ॥ ७-१६ ॥

हे भरतर्षभ अर्जुन! आर्तः, जिज्ञासुः, अर्थार्थी,
ज्ञानी च ( इति) चतुः-विधाः सुकृतिनः जनाः माम् भजन्ते ।

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ ७-१७ ॥

तेषाम् ज्ञानी नित्य-युक्तः एक-भक्तिः विशिष्यते ।
प्रियः हि ज्ञानिनः अत्यर्थम् अहम् सः च मम प्रियः ॥ ७-१७ ॥

तेषाम् नित्य-युक्तः एक-भक्तिः ज्ञानी विशिष्यते । अहम् हि
ज्ञानिनः अत्यर्थम् प्रियः ( अस्मि) , सः ( ज्ञानी) च मम प्रियः ( अस्ति) ।

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ ७-१८ ॥

उदाराः सर्वे एव एते ज्ञानी तु आत्मा एव मे मतम् ।
आस्थितः सः हि युक्त-आत्मा माम् एव अनुत्तमाम् गतिम् ॥ ७-१८ ॥

एते सर्वे एव उदाराः ( सन्ति) , ज्ञानी तु ( मम) आत्मा एव

( अस्ति इति) मे मतम् । सः हि युक्त-आत्मा अनुत्तमाम् गतिम्
माम् एव आस्थितः ( अस्ति) ।

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ ७-१९ ॥

बहूनाम् जन्मनाम् अन्ते ज्ञानवान् माम् प्रपद्यते ।
वासुदेवः सर्वम् इति सः महात्मा सुदुर्लभः ॥ ७-१९ ॥

ज्ञानवान् बहूनाम् जन्मनाम् अन्ते ' वासुदेवः
सर्वम्' इति ( अनुभूय) माम् प्रपद्यते । सः महात्मा सुदुर्लभः ।

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ ७-२० ॥

कामैः तैः तैः हृत-ज्ञानाः प्रपद्यन्ते अन्य-देवताः ।
तम् तम् नियमम् आस्थाय प्रकृत्या नियताः स्वया ॥ ७-२० ॥

तैः तैः कामैः हृत-ज्ञानाः स्वया प्रकृत्या नियताः
( अज्ञानिनः) तम् तम् नियमम् आस्थाय अन्य-देवताः प्रपद्यन्ते ।

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ ७-२१ ॥

यः यः याम् याम् तनुम् भक्तः श्रद्धया अर्चितुम् इच्छति ।
तस्य तस्य अचलाम् श्रद्धाम् ताम् एव विदधामि अहम् ॥ ७-२१ ॥

यः यः भक्तः याम् याम् तनुम् श्रद्धया अर्चितुम् इच्छति,
तस्य तस्य ताम् एव श्रद्धाम् अहम् अचलाम् विदधामि ।

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान् ॥ ७-२२ ॥

सः तया श्रद्धया युक्तः तस्य अराधनम् ईहते ।
लभते च ततः कामान् मया एव विहितान् हि तान् ॥ ७-२२ ॥

सः तया श्रद्धया युक्तः तस्य आराधनम् ईहते, ततः च
मया एव विहितान् तान् कामान् लभते हि ।

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ ७-२३॥

अन्तवत् तु फलम् तेषाम् तत् भवति अल्प-मेधसाम् ।
देवान् देव-यजः यान्ति मत् भक्ताः यान्ति माम् अपि ॥ ७-२३॥

तेषाम् अल्प-मेधसाम् तत् फलम् तु अन्तवत् भवति;
देव-यजः देवान् यान्ति, मत् भक्ताः अपि माम् यान्ति ।

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ ७-२४॥

अव्यक्तम् व्यक्तिम् आपन्नम् मन्यन्ते माम् अबुद्धयः ।
परम् भावम् अजानन्तः मम अव्ययम् अनुत्तमम् ॥ ७-२४॥

मम परम् अव्ययम् अव्यक्तम् अनुत्तमम् भावम्
अजानन्तः अबुद्धयः माम् व्यक्तिम् आपन्नम् मन्यन्ते ।

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ ७-२५॥

न अहम् प्रकाशः सर्वस्य योग-माया-समावृतः ।
मूढः अयम् न अभिजानाति लोकः माम् अजम् अव्ययम् ॥ ७-२५॥

योग-माया-समावृतः अहम् सर्वस्य प्रकाशः न ।
अयम् मूढः लोकः अजम् अव्ययम् माम् न अभिजानाति ।

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ ७-२६॥

वेद अहम् समतीतानि वर्तमानानि च अर्जुन ।
भविष्याणि च भूतानि माम् तु वेद न कश्चन ॥ ७-२६॥

हे अर्जुन! अहम् समतीतानि वर्तमानानि च भविष्याणि च भूतानि वेद । कश्चन तु माम् न वेद ।

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ॥ ७-२७॥

इच्छा-द्वेष-समुत्थेन द्वन्द्व-मोहेन भारत ।
सर्व-भूतानि सम्मोहम् सर्गे यान्ति परन्तप ॥ ७-२७॥

हे परन्तप भारत! सर्व-भूतानि इच्छा-द्वेष-समुत्थेन द्वन्द्व-मोहेन सर्गे सम्मोहम् यान्ति ।

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ ७-२८॥

येषाम् तु अन्तगतम् पापम् जनानाम् पुण्य-कर्मणाम् ।
ते द्वन्द्व-मोह-निर्मुक्ताः भजन्ते माम् दृढ-व्रताः ॥ ७-२८॥

येषाम् पुण्य-कर्मणाम् जनानाम् तु पापम् अन्तगतम्, ते दृढ-व्रताः द्वन्द्व-मोह-निर्मुक्ताः माम् भजन्ते ।

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ ७-२९॥

जरा-मरण-मोक्षाय माम् आश्रित्य यतन्ति ये ।
ते ब्रह्म तत् विदुः कृत्स्नम् अध्यात्मम् कर्म च अखिलम् ॥ ७-२९॥

ये माम् आश्रित्य जरा-मरण-मोक्षाय यतन्ति, ते तत् ब्रह्म, कृत्स्नम् अध्यात्मम्, अखिलम् कर्म च विदुः ।

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ७-३०॥

साधिभूत-अधिदैवम् माम् साधियज्ञम् च ये विदुः ।
प्रयाणकाले अपि च मां ते विदुः युक्त-चेतसः ॥ ७-३०॥

ये साधिभूत-अधिदैवम् साधियज्ञम् च माम् विदुः
ते युक्त-चेतसः प्रयाण-काले अपि च माम् विदुः ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
ज्ञान-विज्ञान-योगः नाम सप्तमः अध्यायः ॥ ७॥

---

अथ अष्टमोऽध्यायः । अक्षरब्रह्मयोगः ।
अथ अष्टमः अध्यायः । अक्षर-ब्रह्म-योगः ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

किं तद् ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ ८-१॥

किम् तत् ब्रह्म किम् अध्यात्मम् किम् कर्म पुरुषोत्तम ।
अधिभूतम् च किम् प्रोक्तम् अधिदैवम् किम् उच्यते ॥ ८-१॥

हे पुरुषोत्तम! तत् ब्रह्म किम्? अध्यात्मम् किम्? कर्म किम्?
अधिभूतम् किम् प्रोक्तम्? अधिदैवम् च किम् उच्यते ?

अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ ८-२॥

अधियज्ञः कथम् कः अत्र देहे अस्मिन् मधुसूदन ।
प्रयाण-काले च कथम् ज्ञेयः असि नियत-आत्मभिः ॥ ८-२॥

हे मधुसूदन! अत्र अस्मिन् देहे अधियज्ञः कः कथम् ( च अस्ति) ?
प्रयाण-काले च नियत-आत्मभिः कथम् ज्ञेयः असि ?

श्रीभगवानुवाच ।

श्रीभगवान् उवाच ।

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ८-३ ॥

अक्षरम् ब्रह्म परमम् स्वभावः अध्यात्मम् उच्यते ।
भूत-भाव-उद्भव-करः विसर्गः कर्म-संज्ञितः ॥ ८-३ ॥

अक्षरम् परमम् ब्रह्म, स्वभावः अध्यात्मम् उच्यते,
भूत-भाव-उद्भव-करः विसर्गः कर्म-संज्ञितः ।

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ८-४ ॥

अधिभूतम् क्षरः भावः पुरुषः च अधिदैवतम् ।
अधियज्ञः अहम् एव अत्र देहे देह-भृताम् वर ॥ ८-४ ॥

हे देह-भृताम् वर! क्षरः भावः अधिभूतम्, पुरुषः
अधिदैवतम्, अत्र देहे च अहम् एव अधियज्ञः ।

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ८-५ ॥

अन्त-काले च माम् एव स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति सः मत् भावम् याति न अस्ति अत्र संशयः ॥ ८-५ ॥

यः च अन्त-काले माम् एव स्मरन् कलेवरम् मुक्त्वा
प्रयाति, सः मत् भावम् याति, अत्र संशयः न अस्ति ।

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ८-६ ॥

यम् यम् वा अपि स्मरन् भावम् त्यजति अन्ते कलेवरम् ।
तम् तम् एव एति कौन्तेय सदा तद्त् भाव-भावितः ॥ ८-६ ॥

हे कौन्तेय! यम् यम् वा अपि भावम् स्मरन् अन्ते कलेवरम् त्यजति;

सदा तद्त् भाव-भावितः ( सः) तम् तम् एव एति ।

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ८-७॥

तस्मात् सर्वेषु कालेषु माम् अनुस्मर युध्य च ।
मयि अर्पित-मनः-बुद्धिः माम् एव एष्यसि असंशयम् ॥ ८-७॥

तस्मात् सर्वेषु कालेषु मयि अर्पित-मनः-बुद्धिः ( भव) ,
माम् अनुस्मर, युध्य च ।( एवं) असंशयम् माम् एव एष्यसि ।

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८-८॥

अभ्यास-योग-युक्तेन चेतसा न अन्य-गामिना ।
परमम् पुरुषम् दिव्यम् याति पार्थ अनुचिन्तयन् ॥ ८-८॥

हे पार्थ! अभ्यास-योग-युक्तेन न अन्य-गामिना चेतसा
अनुचिन्तयन्, दिव्यम् परमम् पुरुषम् याति ।

कविं पुराणमनुशासितारं
अणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपम्-
मादित्यवर्णं तमसः परस्तात् ॥ ८-९॥
प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ ८-१०॥

कविम् पुराणम् अनुशासितारम्
अणोः अणीयांसम् अनुस्मरेत् यः ।
सर्वस्य धातारम् अचिन्त्य-रूपं
आदित्य-वर्णम् तमसः परस्तात् ॥ ८-९॥
प्रयाण-काले मनसा अचलेन
भक्त्या युक्तः योग-बलेन च एव ।
भ्रुवोः मध्ये प्राणम् आवेश्य सम्यक्

सः तम् परम् पुरुषम् उपैति दिव्यम् ॥ ८-१०॥

कविम्, पुराणम्, अनुशासितारम्, अणोः अणीयांसम्,
सर्वस्य धातारम्, अचिन्त्य-रूपं, तमसः परस्तात्
आदित्य-वर्णम् ( विद्यमानं पुरुषं) , प्रयाण-काले,
अचलेन मनसा, भक्त्या युक्तः योग-बलेन च एव भ्रुवोः
मध्ये सम्यक् प्राणम् आवेश्य, यः अनुस्मरेत् सः तम् परम् दिव्यम् पुरुषम् उपैति ।

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ८-११॥

यत् अक्षरम् वेद-विदः वदन्ति
विशन्ति यत् यतयः वीत-रागाः ।
यत् इच्छन्तः ब्रह्मचर्यम् चरन्ति
तत् ते पदम् संग्रहेण प्रवक्ष्ये ॥ ८-११॥

वेद-विदः यत् अक्षरम् वदन्ति, वीत-रागाः यतयः यत्
विशन्ति, ( ब्रह्मचारिणः) यत् इच्छन्तः ब्रह्मचर्यम् चरन्ति,
तत् पदम् ते संग्रहेण प्रवक्ष्ये ।

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ ८-१२॥
ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ ८-१३॥

सर्व-द्वाराणि संयम्य मनः हृदि निरुध्य च ।
मूर्ध्नि आधाय आत्मनः प्राणम् आस्थितः योग-धारणाम् ॥ ८-१२॥
ओम् इति एक-अक्षरम् ब्रह्म व्याहरन् माम् अनुस्मरन् ।
यः प्रयाति त्यजन् देहम् सः याति परमाम् गतिम् ॥ ८-१३॥

सर्व-द्वाराणि संयम्य, मनः च हृदि निरुध्य,
मूर्ध्नि आत्मनः प्राणम् आधाय, योग-धारणाम् आस्थितः,
ओम् इति एक-अक्षरम् ब्रह्म व्याहरन् माम् अनुस्मरन्,
यः देहम् त्यजन् प्रयाति, सः परमाम् गतिम् याति ।

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ ८-१४ ॥

अनन्य-चेताः सततम् यः माम् स्मरति नित्यशः ।
तस्य अहं सुलभः पार्थ नित्य-युक्तस्य योगिनः ॥ ८-१४ ॥

हे पार्थ! यः नित्यशः अनन्य-चेताः ( सन्) माम्
सततं स्मरति, तस्य नित्य-युक्तस्य योगिनः अहं सुलभः ( अस्मि) ।

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ ८-१५ ॥

माम् उपेत्य पुनः-जन्म दुःख-आलयम् अशाश्वतम् ।
न आप्नुवन्ति महात्मानः संसिद्धिम् परमाम् गताः ॥ ८-१५ ॥

परमाम् संसिद्धिम् गताः महात्मानः माम् उपेत्य,
पुनः दुःख-आलयम् अशाश्वतम् जन्म न आप्नुवन्ति ।

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ ८-१६ ॥

आब्रह्म-भुवनात् लोकाः पुनः-आवर्तिनः अर्जुन ।
माम् उपेत्य तु कौन्तेय पुनः-जन्म न विद्यते ॥ ८-१६ ॥

हे अर्जुन! आब्रह्म-भुवनात् ( सर्वे) लोकाः पुनः-आवर्तिनः
( सन्ति) ; हे कौन्तेय! माम् उपेत्य तु पुनः जन्म न विद्यते ।

सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ ८-१७ ॥

सहस्र-युग-पर्यन्तम् अहः यत् ब्रह्मणः विदुः ।
रात्रिम् युग-सहस्र-अन्ताम् ते अहोरात्र-विदः जनाः ॥ ८-१७ ॥

यत् ते अहोरात्र-विदः जनाः सहस्र-युग-पर्यन्तम् ब्रह्मणः
अहः युग-सहस्र-अन्ताम् रात्रिम् ( च) विदुः ।

अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ ८-१८॥

अव्यक्तात् व्यक्तयः सर्वाः प्रभवन्ति अहः आगमे ।
रात्रि आगमे प्रलीयन्ते तत्र एव अव्यक्त-संज्ञके ॥ ८-१८॥

अहः आगमे सर्वाः व्यक्तयः अव्यक्तात् प्रभवन्ति,
( पुनः) रात्रि आगमे तत्र अव्यक्त-संज्ञके एव प्रलीयन्ते ।

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ ८-१९॥

भूत-ग्रामः सः एव अयम् भूत्वा भूत्वा प्रलीयते ।
रात्रि आगमे अवशः पार्थ प्रभवति अहः आगमे ॥ ८-१९॥

हे पार्थ! सः एव अयम् भूत-ग्रामः अवशः ( सन्) ,
भूत्वा भूत्वा रात्रि आगमे प्रलीयते ( पुनः) अहः आगमे प्रभवति ।

परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ ८-२०॥

परः तस्मात् तु भावः अन्यः अव्यक्तः अव्यक्तात् सनातनः ।
यः सः सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ ८-२०॥

यः तु सर्वेषु भूतेषु नश्यत्सु न विनश्यति, सः, तस्मात्
अव्यक्तात् अन्यः, अव्यक्तः सनातनः परः भावः ( अस्ति)

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ ८-२१॥

अव्यक्तः अक्षरः इति उक्तः तम् आहुः परमाम् गतिम् ।
यम् प्राप्य न निवर्तन्ते तत् धाम परमम् मम ॥ ८-२१॥

( यः) अव्यक्तः ( भावः) अक्षरः इति उक्तः, तम् परमाम्
गतिम् आहुः, ( ज्ञानिनः) यम् प्राप्य न निवर्तन्ते, तत्

मम परमम् धाम ( अस्ति) ।

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ ८-२२॥

पुरुषः सः परः पार्थ भक्त्या लभ्यः तु अनन्यया ।
यस्य अन्तः-स्थानि भूतानि येन सर्वम् इदम् ततम् ॥ ८-२२॥

हे पार्थ! भूतानि यस्य अन्तः-स्थानि ( सन्ति) , येन इदम्
सर्वम् ततम्, सः तु परः पुरुषः अनन्यया भक्त्या लभ्यः ( अस्ति) ।

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ ८-२३॥

यत्र काले तु अनावृत्तिम् आवृत्तिम् च एव योगिनः ।
प्रयाताः यान्ति तम् कालम् वक्ष्यामि भरतर्षभ ॥ ८-२३॥

हे भरतर्षभ! यत्र काले तु प्रयाताः योगिनः अनावृत्तिम्
आवृत्तिम् च एव यान्ति, तम् कालम् वक्ष्यामि ।

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ ८-२४॥

अग्निः ज्योतिः अहः शुक्लः षण्मासाः उत्तर-आयणम् ।
तत्र प्रयाताः गच्छन्ति ब्रह्म ब्रह्मविदः जनाः ॥ ८-२४॥

अग्निः, ज्योतिः, अहः, शुक्लः ( पक्षः) , षण्मासाः उत्तर-आयनम्,
तत्र ( काले) प्रयाताः ब्रह्मविदः जनाः ब्रह्म गच्छन्ति ।

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ ८-२५॥

धूमः रात्रिः तथा कृष्णः षण्मासाः दक्षिण-आयनम् ।
तत्र चान्द्रमसम् ज्योतिः योगी प्राप्य निवर्तते ॥ ८-२५॥

धूमः, रात्रिः, तथा कृष्णः ( पक्षः) , षण्मासाः

दक्षिण-आयनम्, तत्र ( काले प्रयाताः) योगी चान्द्रमसम्
ज्योतिः प्राप्य निवर्तते ।

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ ८-२६ ॥

शुक्ल-कृष्णे गती हि एते जगतः शाश्वते मते ।
एकया याति अनावृत्तिम् अन्यया आवर्तते पुनः ॥ ८-२६ ॥

जगतः एते हि शुक्ल-कृष्णे गती शाश्वते मते ।
एकया अनावृत्तिम् याति अन्यया पुनः आवर्तते ।

नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ ८-२७ ॥

न एते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योग-युक्तः भव अर्जुन ॥ ८-२७ ॥

हे पार्थ! एते सृती जानन् कश्चन योगी न मुह्यति;
तस्मात् हे अर्जुन! ( त्वं) सर्वेषु कालेषु योग-युक्तः भव ।

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ ८-२८ ॥

वेदेषु यज्ञेषु तपःसु च एव
दानेषु यत् पुण्य-फलम् प्रदिष्टम् ।
अत्येति तत् सर्वम् इदम् विदित्वा
योगी परम् स्थानम् उपैति च आद्यम् ॥ ८-२८ ॥

योगी इदम् विदित्वा, वेदेषु यज्ञेषु तपःसु दानेषु च एव
यत् पुण्य-फलम् प्रदिष्टम्, तत् सर्वम् अत्येति, आद्यम् परम् च स्थानम् उपैति ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे

अक्षरब्रह्मयोगो नामाष्टमोऽध्यायः ॥ ८॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
अक्षर-ब्रह्म-योगः नाम अष्टमः अध्यायः ॥ ८॥

---

अथ नवमोऽध्यायः । राजविद्याराजगुह्ययोगः ।
अथ नवमः अध्यायः । राज-विद्या-राज-गुह्य-योगः ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ ९-१॥

इदम् तु ते गुह्यतमम् प्रवक्ष्यामि अनसूयवे ।
ज्ञानम् विज्ञान-सहितम् यत् ज्ञात्वा मोक्ष्यसे अशुभात् ॥ ९-१॥

यत् ज्ञात्वा ( त्वं) अशुभात् मोक्ष्यसे, ( तत्) तु इदम्
गुह्यतमम् विज्ञान-सहितम् ज्ञानम् अनसूयवे ते प्रवक्ष्यामि ।

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ ९-२॥

राज-विद्या राज-गुह्यम् पवित्रम्म् इदम् उत्तमम् ।
प्रत्यक्ष-अवगमम् धर्म्यम् सुसुखम् कर्तुम् अव्ययम् ॥ ९-२॥

इदम् ( ज्ञानं) राज-विद्या, राज-गुह्यम्, उत्तमम्,
पवित्रम्, अव्ययम्, प्रत्यक्ष-अवगमम्, कर्तुम् सुसुखम्,
धर्म्यम् च ( अस्ति) ।

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ९-३॥

अश्रद्दधानाः पुरुषाः धर्मस्य अस्य परन्तप ।

अप्राप्य माम् निवर्तन्ते मृत्यु-संसार-वर्त्मनि ॥ ९-३॥

हे परन्तप! अस्य धर्मस्य अश्रद्दधानाः पुरुषाः माम्
अप्राप्य मृत्यु-संसार-वर्त्मनि निवर्तन्ते ।

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ९-४॥

मया ततम् इदम् सर्वम् जगत् अव्यक्त-मूर्तिना ।
मत्-स्थानि सर्व-भूतानि न च अहम् तेषु अवस्थितः ॥ ९-४॥

अव्यक्त-मूर्तिना मया इदम् सर्वम् जगत् ततम् ।
सर्व-भूतानि मत्-स्थानि ( सन्ति) , अहम् च तेषु न अवस्थितः ( अस्मि) ।

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ९-५॥

न च मत्-स्थानि भूतानि पश्य मे योगम् ऐश्वरम् ।
भूत-भृत् न च भूत-स्थः मम आत्मा भूत-भावनः ॥ ९-५॥

भूतानि च मत्-स्थानि न ( सन्ति) , मे ऐश्वरम् योगम् पश्य ।
( अहं) भूत-भृत् ( अपि) भूत-स्थः न । मम आत्मा च
भूत-भावनः ( अस्ति) ।

यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ९-६॥

यथा आकाश-स्थितः नित्यम् वायुः सर्वत्रगः महान् ।
तथा सर्वाणि भूतानि मत्-स्थानि इति उपधारय ॥ ९-६॥

यथा सर्वत्रगः महान् वायुः नित्यम् आकाश-स्थितः ( अस्ति) ,
तथा सर्वाणि भूतानि मत्-स्थानि ( सन्ति) , इति ( त्वं) उपधारय ।

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ९-७॥

सर्व-भूतानि कौन्तेय प्रकृतिम् यान्ति मामिकाम् ।
कल्प-क्षये पुनः तानि कल्प-आदौ विसृजामि अहम् ॥ ९-७॥

हे कौन्तेय! सर्व-भूतानि कल्प-क्षये मामिकाम् प्रकृतिम्
यान्ति । पुनः कल्प-आदौ तानि विसृजामि ।

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ९-८॥

प्रकृतिम् स्वाम् अवष्टभ्य विसृजामि पुनः पुनः ।
भूत-ग्रामम् इमम् कृत्स्नम् अवशम् प्रकृतेः वशात् ॥ ९-८॥

( अहम्) स्वाम् प्रकृतिम् अवष्टभ्य प्रकृतेः वशात्
अवशम् इमम् कृत्स्नम् भूत-ग्रामम् पुनः पुनः विसृजामि ।

न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९-९॥

न च माम् तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवत् आसीनम् असक्तम् तेषु कर्मसु ॥ ९-९॥

हे धनञ्जय! तेषु कर्मसु असक्तम् उदासीनवत्
आसीनम् माम् तानि कर्माणि च न निबध्नन्ति ।

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ ९-१०॥

मया अध्यक्षेण प्रकृतिः सूयते सचर-अचरम् ।
हेतुना अनेन कौन्तेय जगत् विपरिवर्तते ॥ ९-१०॥

हे कौन्तेय! मया अध्यक्षेण प्रकृतिः सचर-अचरम् सूयते,
अनेन हेतुना जगत् विपरिवर्तते ।

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ९-११॥

अवजानन्ति माम् मूढाः मानुषीम् तनुम् आश्रितम् ।
परम् भावम् अजानन्तः मम भूत-महेश्वरम् ॥ ९-११॥

भूत-महेश्वरम् मम परम् भावम् अजानन्तः मूढाः
मानुषीम् तनुम् आश्रितम् माम् अवजानन्ति ।

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ ९-१२॥

मोघ-आशाः मोघ-कर्माणः मोघ-ज्ञानाः विचेतसः ।
राक्षसीम् आसुरीम् च एव प्रकृतिम् मोहिनीम् श्रिताः ॥ ९-१२॥

( ते) मोघ-आशाः मोघ-कर्माणः मोघ-ज्ञानाः विचेतसः
मोहिनीम् राक्षसीम् आसुरीम् प्रकृतिम् च एव श्रिताः ।

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ ९-१३॥

महात्मानः तु माम् पार्थ दैवीम् प्रकृतिम् आश्रिताः ।
भजन्ति अनन्य-मनसः ज्ञात्वा भूतादिम् अव्ययम् ॥ ९-१३॥

हे पार्थ! दैवीम् प्रकृतिम् आश्रिताः महात्मानः तु
माम् भूतादिम् अव्ययम् ज्ञात्वा, अनन्य-मनसः ( मां) भजन्ति ।

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ ९-१४॥

सततम् कीर्तयन्तः माम् यतन्तः च दृढ-व्रताः ।
नमस्यन्तः च माम् भक्त्या नित्य-युक्ताः उपासते ॥ ९-१४॥

( ते) नित्य-युक्ताः भक्त्या माम् सततम् कीर्तयन्तः यतन्तः च
दृढ-व्रताः नमस्यन्तः च माम् उपासते ।

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ ९-१५॥

ज्ञान-यज्ञेन च अपि अन्ये यजन्तः माम् उपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ ९-१५ ।

अन्ये च अपि ज्ञान-यज्ञेन यजन्तः एकत्वेन, पृथक्त्वेन,
बहुधा विश्वतोमुखम् माम् उपासते ।

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ ९-१६ ॥

अहम् क्रतुः अहम् यज्ञः स्वधा अहम् अहम् औषधम् ।
मन्त्रः अहम् अहम् एव आज्यम् अहम् अग्निः अहम् हुतम् ॥ ९-१६ ॥

अहम् क्रतुः, अहम् यज्ञः, अहम् स्वधा, अहम् औषधम्,
अहम् मन्त्रः, अहम् एव आज्यम्, अहम् अग्निः, अहम् हुतम्,

पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥ ९-१७ ॥

पिता अहम् अस्य जगतः माता धाता पितामहः ।
वेद्यम् पवित्रम् ओंकारः ऋक्-साम यजुः एव च ॥ ९-१७ ॥

अहम् अस्य जगतः माता, पिता, धाता, पितामहः, वेद्यम् ( वस्तु) ,
पवित्रम् ( वस्तु) , ओङ्कारः, ऋक्, साम, यजुः एव च ( अस्मि) ।

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ ९-१८ ॥

गतिः भर्ता प्रभुः साक्षी निवासः शरणम् सुहृत् ।
प्रभवः प्रलयः स्थानम् निधानम् बीजम् अव्ययम् ॥ ९-१८ ॥

( अहं) गतिः, भर्ता, प्रभुः, साक्षी, निवासः, शरणम्,
सुहृत्, प्रभवः, प्रलयः, स्थानम्, निधानम्,
अव्ययम् बीजम् ( च अस्मि) ।

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ ९-१९ ॥

तपामि अहम् अहम् वर्षम् निगृह्णामि उत्सृजामि च ।
अमृतम् च एव मृत्युः च सत् असत् च अहम् अर्जुन ॥ ९-१९ ॥

हे अर्जुन! अहम् तपामि, अहम् वर्षम्, निगृह्णामि उत्सृजामि च, अहम् एव अमृतम् मृत्युः च, ( अहं एव) सत् असत् च ( अस्मि) ।

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान् ॥ ९-२० ॥

त्रै-विद्याः माम् सोमपाः पूत-पापाः
यज्ञैः इष्ट्वा स्वर्गतिम् प्रार्थयन्ते ।
ते पुण्यम् आसाद्य सुरेन्द्र-लोकं
अश्नन्ति दिव्यान् दिवि देव-भोगान् ॥ ९-२० ॥

त्रै-विद्याः सोमपाः पूत-पापाः माम् यज्ञैः इष्ट्वा स्वर्गतिम् प्रार्थयन्ते । ते पुण्यम् सुरेन्द्र-लोकं आसाद्य, दिवि दिव्यान् देव-भोगान् अश्नन्ति ।

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ ९-२१ ॥

ते तम् भुक्त्वा स्वर्ग-लोकम् विशालम्
क्षीणे पुण्ये मर्त्य-लोकम् विशन्ति ।
एवम् त्रयी-धर्मम् अनुप्रपन्नाः
गत-आगतम् काम-कामाः लभन्ते ॥ ९-२१ ॥

ते तम् विशालम् स्वर्ग-लोकम् भुक्त्वा, पुण्ये क्षीणे ( सति) मर्त्य-लोकम् विशन्ति । एवम् त्रयी-धर्मम् अनुप्रपन्नाः काम-कामाः गत-आगतम् लभन्ते ।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ९-२२ ॥

अनन्याः चिन्तयन्तः माम् ये जनाः पर्युपासते ।
तेषाम् नित्य-अभियुक्तानाम् योग-क्षेमम् वहामि अहम् ॥ ९-२२ ॥

अनन्याः चिन्तयन्तः ये जनाः माम् पर्युपासते, तेषाम्
नित्य-अभियुक्तानाम् योग-क्षेमम् अहम् वहामि ।

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ ९-२३ ॥

ये अपि अन्य-देवता-भक्ताः यजन्ते श्रद्धया अन्विताः ।
ते अपि माम् एव कौन्तेय यजन्ति अविधि-पूर्वकम् ॥ ९-२३ ॥

अपि ये अन्य-देवता-भक्ताः श्रद्धया अन्विताः
यजन्ते, ते अपि हे कौन्तेय! अविधि-पूर्वकम् माम् एव यजन्ति ।

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ ९-२४ ॥

अहम् हि सर्व-यज्ञानाम् भोक्ता च प्रभुः एव च ।
न तु माम् अभिजानन्ति तत्त्वेन अतः च्यवन्ति ते ॥ ९-२४ ॥

अहम् हि सर्व-यज्ञानाम् भोक्ता च प्रभुः एव च ( अस्मि) ,
माम् तु तत्त्वेन न अभिजानन्ति, अतः ते च्यवन्ति ।

यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ ९-२५ ॥

यान्ति देव-व्रताः देवान् पितॄन् यान्ति पितृ-व्रताः ।
भूतानि यान्ति भूत-इज्याः यान्ति मत् याजिनः अपि माम् ॥ ९-२५ ॥

देव-व्रताः देवान् यान्ति, पितृ-व्रताः पितॄन् यान्ति,
भूत-इज्याः भूतानि यान्ति, मत् याजिनः अपि माम् यान्ति ।

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ९-२६ ॥

पत्रम् पुष्पम् फलम् तोयम् यः मे भक्त्या प्रयच्छति ।
तत् अहम् भक्ति-उपहृतम् अश्नामि प्रयत आत्मनः ॥ ९-२६ ॥

यः पत्रम् पुष्पम् फलम् तोयम् भक्त्या मे प्रयच्छति,
( तस्य) प्रयत-आत्मनः भक्ति-उपहृतम् तत् अहम् अश्नामि ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ ९-२७ ॥

यत् करोषि यत् अश्नासि यत् जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मत् अर्पणम् ॥ ९-२७ ॥

हे कौन्तेय! यत् करोषि, यत् अश्नासि, यत् जुहोषि,
यत् ददासि, यत् तपस्यसि, तत् मत् अर्पणम् कुरुष्व ।

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ ९-२८ ॥

शुभ-अशुभ-फलैः एवम् मोक्ष्यसे कर्म-बन्धनैः ।
संन्यास-योग-युक्त-आत्मा विमुक्तः माम् उपैष्यसि ॥ ९-२८ ॥

एवम् ( कृते सति) शुभ-अशुभ-फलैः कर्म-बन्धनैः
संन्यास-योग-युक्त-आत्मा विमुक्तः ( भूत्वा) मोक्ष्यसे
माम् उप-एष्यसि ।

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ ९-२९ ॥

समः अहम् सर्व-भूतेषु न मे द्वेष्यः अस्ति न प्रियः ।
ये भजन्ति तु माम् भक्त्या मयि ते तेषु च अपि अहम् ॥ ९-२९ ॥

अहम् सर्व-भूतेषु समः, मे द्वेष्यः प्रियः च न अस्ति,
( परं) तु ये माम् भक्त्या भजन्ति, ते मयि, ( च) अहम् अपि तेषु ( च) ।

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ९-३०॥

अपि चेत् सु-दुः-आचारः भजते माम् अनन्य-भाक् ।
साधुः एव सः मन्तव्यः सम्यक् व्यवसितः हि सः ॥ ९-३०॥

सु-दुः-आचारः अपि माम् अनन्य-भाक् भजते चेत्,
सः साधुः एव मन्तव्यः, सः हि सम्यक् व्यवसितः ( अस्ति) ।

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ९-३१॥

क्षिप्रम् भवति धर्म-आत्मा शश्वत् शान्तिम् निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ९-३१॥

हे कौन्तेय! ( सः) क्षिप्रम् धर्म-आत्मा भवति, शश्वत्
शान्तिम् निगच्छति, मे भक्तः न प्रणश्यति, ( इति त्वं) प्रतिजानीहि ।

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ९-३२॥

माम् हि पार्थ व्यपाश्रित्य ये अपि स्युः पाप-योनयः ।
स्त्रियः वैश्याः तथा शूद्राः ते अपि यान्ति पराम् गतिम् ॥ ९-३२॥

हे पार्थ! ये अपि हि पाप-योनयः स्त्रियः वैश्याः तथा
शूद्राः स्युः ते अपि माम् व्यपाश्रित्य, पराम् गतिम् यान्ति ।

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ९-३३॥

किम् पुनः ब्राह्मणाः पुण्याः भक्ताः राजर्षयः तथा ।
अनित्यम् असुखम् लोकम् इमम् प्राप्य भजस्व माम् ॥ ९-३३॥

किम् पुनः पुण्याः भक्ताः ब्राह्मणाः तथा राजर्षयः?
( तस्मात् त्वं) अनित्यम् असुखम् इमम् लोकम् प्राप्य, माम् भजस्व ।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ९-३४ ॥

मत्-मनाः भव मत्-भक्तः मत्-याजी माम् नमस्कुरु ।
माम् एव एष्यसि युक्त्वा एवम् आत्मानम् मत्-परायणः ॥ ९-३४ ॥

( त्वं) मत्-मनाः मत्-भक्तः मत्-याजी ( च) भव,
माम् मत्-परायणः ( सन्) नमस्कुरु एवम् आत्मानम्
युक्त्वा माम् एव एष्यसि ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
राजविद्या-राजगुह्य-योगः नाम नवमः अध्यायः ॥ ९ ॥

---

अथ दशमोऽध्यायः । विभूतियोगः ।
अथ दशमः अध्यायः । विभूति-योगः ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १०-१ ॥

भूयः एव महाबाहो शृणु मे परमम् वचः ।
यत् ते अहम् प्रीयमाणाय वक्ष्यामि हित-काम्यया ॥ १०-१ ॥

हे महाबाहो! भूयः एव मे परमम् वचः शृणु ।
प्रीयमाणाय ते यत् अहम् हित-काम्यया वक्ष्यामि ।

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।

अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥१०-२॥

न मे विदुः सुर-गणाः प्रभवम् न महर्षयः ।
अहम् आदिः हि देवानाम् महर्षीणाम् च सर्वशः ॥१०-२॥

सुर-गणाः महर्षयः च मे प्रभवम् न विदुः, अहम् हि
देवानाम् महर्षीणाम् ( च) सर्वशः आदिः ( अस्मि) ।

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥१०-३॥

यः माम् अजम् अनादिम् च वेत्ति लोक-महेश्वरम् ।
असम्मूढः सः मर्त्येषु सर्व-पापैः प्रमुच्यते ॥१०-३॥

यः माम् अजम् अनादिम् लोक-महेश्वरम् च वेत्ति,
सः मर्त्येषु असम्मूढः ( भूत्वा) सर्व-पापैः प्रमुच्यते ।

बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥१०-४॥

बुद्धिः ज्ञानम् असम्मोहः क्षमा सत्यम् दमः शमः ।
सुखम् दुःखम् भवः अभावः भयम् च अभयम् एव च ॥१०-४॥

बुद्धिः, ज्ञानम्, असम्मोहः, क्षमा, सत्यम्, दमः,
शमः, सुखम्, दुःखम्, भवः, अभावः, भयम् च
एव अभयम् च

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥१०-५॥

अहिंसा समता तुष्टिः तपः दानम् यशः अयशः ।
भवन्ति भावाः भूतानाम् मत्तः एव पृथक्-विधाः ॥१०-५॥

अहिंसा, समता, तुष्टिः, तपः, दानम्, यशः, अयशः,
( इमे) भूतानाम् पृथक्-विधाः भावाः मत्तः एव भवन्ति ।

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ १०-६ ॥

महर्षयः सप्त पूर्वे चत्वारः मनवः तथा ।
मत् भावाः मानसाः जाताः येषाम् लोके इमाः प्रजाः ॥ १०-६ ॥

पूर्वे सप्त महर्षयः तथा चत्वारः मनवः मत् भावाः,
मानसाः जाताः येषाम् लोके इमाः प्रजाः ।

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ १०-७ ॥

एताम् विभूतिम् योगम् च मम यः वेत्ति तत्त्वतः ।
सः अविकम्पेन योगेन युज्यते न अत्र संशयः ॥ १०-७ ॥

यः मम एताम् विभूतिम् योगम् च तत्त्वतः वेत्ति,
सः अविकम्पेन योगेन युज्यते अत्र संशयः न ।

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ १०-८ ॥

अहम् सर्वस्य प्रभवः मत्तः सर्वम् प्रवर्तते ।
इति मत्वा भजन्ते माम् बुधाः भाव-समन्विताः ॥ १०-८ ॥

अहम् सर्वस्य प्रभवः ( अस्मि) , मत्तः सर्वम् प्रवर्तते,
इति मत्वा बुधाः भाव-समन्विताः माम् भजन्ते ।

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ १०-९ ॥

मत् चित्ताः मत् गत-प्राणाः बोधयन्तः परस्परम् ।
कथयन्तः च माम् नित्यम् तुष्यन्ति च रमन्ति च ॥ १०-९ ॥

मत् चित्ताः मत् गत-प्राणाः परस्परम् माम् बोधयन्तः
कथयन्तः च नित्यम् तुष्यन्ति च ।

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १०-१० ॥

तेषाम् सतत-युक्तानाम् भजताम् प्रीति-पूर्वकम् ।
ददामि बुद्धि-योगम् तम् येन माम् उपयान्ति ते ॥ १०-१० ॥

( एवं) सतत-युक्तानाम् प्रीति-पूर्वकम् भजताम् तेषाम्
तम् बुद्धि-योगम् ददामि येन ते माम् उपयान्ति ।

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ १०-११ ॥

तेषाम् एव अनुकम्पार्थम् अहम् अज्ञानजम् तमः ।
नाशयामि आत्म-भावस्थः ज्ञान-दीपेन भास्वता ॥ १०-११ ॥

तेषाम् एव अनुकम्पार्थम् अहम् आत्म-भावस्थः ( सन्)
भास्वता ज्ञान-दीपेन अज्ञानजम् तमः नाशयामि ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १०-१२ ॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १०-१३ ॥

परम् ब्रह्म परम् धाम पवित्रम् परमम् भवान् ।
पुरुषम् शाश्वतम् दिव्यम् आदिदेवम् अजम् विभुम् ॥ १०-१२ ॥
आहुः त्वाम् ऋषयः सर्वे देवर्षिः नारदः तथा ।
असितः देवलः व्यासः स्वयम् च एव ब्रवीषि मे ॥ १०-१३ ॥

भवान् परम् ब्रह्म, परम् धाम, परमम् पवित्रम् ( अस्ति) ।
सर्वे ऋषयः त्वाम् शाश्वतम् दिव्यम् आदिदेवम् अजम्
विभुम् पुरुषम् आहुः । तथा देवर्षिः नारदः असितः देवलः
व्यासः ( कथयति) ( त्वं) च स्वयम् एव मे ब्रवीषि ।

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥ १०-१४ ॥

सर्वम् एतत् ऋतम् मन्ये यत् माम् वदसि केशव ।
न हि ते भगवन् व्यक्तिम् विदुः देवाः न दानवाः ॥ १०-१४ ॥

हे केशव! यत् माम् (त्वं) वदसि, (तत्) एतत् सर्वम्
(अहं) ऋतम् मन्ये । हे भगवन्! न देवाः न दानवाः
(वा) ते व्यक्तिम् हि विदुः ।

स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १०-१५ ॥

स्वयम् एव आत्मना आत्मानम् वेत्थ त्वम् पुरुषोत्तम ।
भूत-भावन भूत-ईश देव-देव जगत्-पते ॥ १०-१५ ॥

हे पुरुषोत्तम! भूत-भावन, भूत-ईश, देव-देव,
हे जगत्-पते! त्वम् स्वयम् एव आत्मना आत्मानम् वेत्थ ।

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १०-१६ ॥

वक्तुम् अर्हसि अशेषेण दिव्याः हि आत्म-विभूतयः ।
याभिः विभूतिभिः लोकान् इमान् त्वम् व्याप्य तिष्ठसि ॥ १०-१६ ॥

(अतः) याभिः विभूतिभिः त्वम् इमान् लोकान् व्याप्य तिष्ठसि,
(ताः) दिव्याः आत्म-विभूतयः हि अशेषेण वक्तुम् अर्हसि ।

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १०-१७ ॥

कथम् विद्याम् अहम् योगिन् त्वाम् सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्यः असि भगवन् मया ॥ १०-१७ ॥

हे योगिन्! सदा परिचिन्तयन् अहम् त्वाम् कथम् विद्याम् ?
हे भगवन्! केषु केषु च भावेषु (त्वं) मया चिन्त्यः असि ?

विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१०-१८॥

विस्तरेण आत्मनः योगम् विभूतिम् च जनार्दन ।
भूयः कथय तृप्तिः हि शृण्वतः न अस्ति मे अमृतम् ॥१०-१८॥

हे जनार्दन! आत्मनः योगम् विभूतिम् च भूयः विस्तरेण
कथय ।( एतत्) अमृतम् शृण्वतः हि मे तृप्तिः न अस्ति ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१०-१९॥

हन्त ते कथयिष्यामि दिव्याः हि आत्म-विभूतयः ।
प्राधान्यतः कुरु-श्रेष्ठ न अस्ति अन्तः विस्तरस्य मे ॥१०-१९॥

हे कुरु-श्रेष्ठ! हन्त, दिव्याः आत्म-विभूतयः प्राधान्यतः
ते कथयिष्यामि, मे विस्तरस्य हि अन्तः न अस्ति ।

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥१०-२०॥

अहम् आत्मा गुडाका-ईश सर्व-भूत-आशय-स्थितः ।
अहम् आदिः च मध्यम् च भूतानाम् अन्तः एव च ॥१०-२०॥

हे गुडाका-ईश! अहम्, सर्व-भूत-आशय-स्थितः आत्मा,
भूतानाम् आदिः च मध्यम् च अन्तः च अहम् एव ।

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥१०-२१॥

आदित्यानाम् अहम् विष्णुः ज्योतिषाम् रविः अंशुमान् ।
मरीचिः मरुताम् अस्मि नक्षत्राणाम् अहम् शशी ॥१०-२१॥

आदित्यानाम् विष्णुः अहम्, ज्योतिषाम् अंशुमान् रविः,
मरुताम् मरीचिः, नक्षत्राणाम् शशी ( च) अहम् अस्मि ।

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ १०-२२ ॥

वेदानाम् सामवेदः अस्मि देवानाम् अस्मि वासवः ।
इन्द्रियाणाम् मनः च अस्मि भूतानाम् अस्मि चेतना ॥ १०-२२ ॥

वेदानाम् सामवेदः ( अहं) , अस्मि देवानाम् वासवः अस्मि,
इन्द्रियाणाम् मनः अस्मि, भूतानाम् चेतना च अस्मि ।

रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ १०-२३ ॥

रुद्राणाम् शङ्करः च अस्मि वित्त-ईशः यक्ष-रक्षसाम् ।
वसूनाम् पावकः च अस्मि मेरुः शिखरिणाम् अहम् ॥ १०-२३ ॥

रुद्राणाम् शङ्करः, यक्ष-रक्षसाम् च वित्त-ईशः अस्मि,
वसूनाम् पावकः, शिखरिणाम् मेरुः च अहम् अस्मि ।

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ १०-२४ ॥

पुरोधसाम् च मुख्यम् माम् विद्धि पार्थ बृहस्पतिम् ।
सेनानीनाम् अहम् स्कन्दः सरसाम् अस्मि सागरः ॥ १०-२४ ॥

हे पार्थ! पुरोधसाम् च मुख्यम् बृहस्पतिम् माम् विद्धि,
सेनानीनाम् स्कन्दः, सरसाम् सागरः अहम् अस्मि ।

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ १०-२५ ॥

महर्षीणाम् भृगुः अहम् गिराम् अस्मि एकम् अक्षरम् ।
यज्ञानाम् जप-यज्ञः अस्मि स्थावराणाम् हिमालयः ॥ १०-२५ ॥

महर्षीणाम् भृगुः, गिराम् एकम् अक्षरम् अहम् अस्मि,
यज्ञानाम् जप-यज्ञः, स्थावराणाम् हिमालयः ( च) अस्मि ।

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ १०-२६ ॥

अश्वत्थः सर्व-वृक्षाणाम् देवर्षीणाम् च नारदः ।
गन्धर्वाणाम् चित्ररथः सिद्धानाम् कपिलः मुनिः ॥ १०-२६ ॥

सर्व-वृक्षाणाम् अश्वत्थः, देवर्षीणाम् च नारदः,
गन्धर्वाणाम् चित्ररथः, सिद्धानाम् कपिलः मुनिः ( अहं अस्मि) ।

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ १०-२७ ॥

उच्चैःश्रवसम् अश्वानाम् विद्धि माम् अमृत-उद्भवम् ।
ऐरावतम् गजेन्द्राणाम् नराणाम् च नराधिपम् ॥ १०-२७ ॥

अश्वानाम् अमृत-उद्भवम् उच्चैःश्रवसम्, गजेन्द्राणाम्
ऐरावतम्, नराणाम् नराधिपम् च माम् विद्धि ।

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ १०-२८ ॥

आयुधानाम् अहम् वज्रम् धेनूनाम् अस्मि कामधुक् ।
प्रजनः च अस्मि कन्दर्पः सर्पाणाम् अस्मि वासुकिः ॥ १०-२८ ॥

आयुधानाम् वज्रम् अहम्, धेनूनाम् कामधुक्
( अहं) अस्मि, प्रजनः कन्दर्पः अस्मि, सर्पाणाम् वासुकिः च अस्मि ।

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ १०-२९ ॥

अनन्तः च अस्मि नागानाम् वरुणः यादसाम् अहम् ।
पितॄणाम् अर्यमा च अस्मि यमः संयमताम् अहम् ॥ १०-२९ ॥

नागानाम् अनन्तः, यादसाम् वरुणः च अहम् अस्मि,
पितॄणाम् अर्यमा च, संयमताम् यमः ( च) अहम् अस्मि ।

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ १०-३०॥

प्रह्लादः च अस्मि दैत्यानाम् कालः कलयताम् अहम् ।
मृगाणाम् च मृगेन्द्रः अहम् वैनतेयः च पक्षिणाम् ॥ १०-३०॥

दैत्यानाम् प्रह्लादः, कलयताम् कालः च अहम् अस्मि,
मृगाणाम् मृगेन्द्रः च , पक्षिणाम् वैनतेयः च अहम् ( अस्मि) ।

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ १०-३१॥

पवनः पवताम् अस्मि रामः शस्त्र-भृताम् अहम् ।
झषाणाम् मकरः च अस्मि स्रोतसाम् अस्मि जाह्नवी ॥ १०-३१॥

पवताम् पवनः अस्मि, शस्त्र-भृताम् च रामः अहम् ( अस्मि) ,
झषाणाम् मकरः अस्मि, स्रोतसाम् जाह्नवी च ( अहं) अस्मि ।

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ १०-३२॥

सर्गाणाम् आदिः अन्तः च मध्यम् च एव अहम् अर्जुन ।
अध्यात्म-विद्या विद्यानाम् वादः प्रवदताम् अहम् ॥ १०-३२॥

हे अर्जुन! सर्गाणाम् आदिः मध्यम् च अन्तः च एव अहम्
( अस्मि) , विद्यानाम् अध्यात्म-विद्या, प्रवदताम् वादः अहम् ( अस्मि) ।

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ १०-३३॥

अक्षराणाम् अकारः अस्मि द्वन्द्वः सामासिकस्य च ।
अहम् एव अक्षयः कालः धाता अहं विश्वतोमुखः ॥ १०-३३॥

अक्षराणाम् अकारः, सामासिकस्य च द्वन्द्वः,
अक्षयः कालः अहम् एव , विश्वतोमुखः धाता ( च) अहं अस्मि ।

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ १०-३४ ॥

मृत्युः सर्व-हरः च अहम् उद्भवः च भविष्यताम् ।
कीर्तिः श्रीः वाक् च नारीणाम् स्मृतिः मेधा धृतिः क्षमा ॥ १०-३४ ॥

सर्व-हरः मृत्युः, भविष्यताम् उद्भवः च अहम्
नारीणाम् च कीर्तिः श्रीः वाक् स्मृतिः मेधा धृतिः
क्षमा च ( अहं अस्मि) ।

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ १०-३५ ॥

बृहत्-साम तथा साम्नाम् गायत्री छन्दसाम् अहम् ।
मासानाम् मार्गशीर्षः अहम् ऋतूनाम् कुसुमाकरः ॥ १०-३५ ॥

साम्नाम् बृहत्-साम, तथा छन्दसाम् गायत्री अहम्,
मासानाम् मार्गशीर्षः, ऋतूनाम् कुसुमाकरः अहम् ( अस्मि) ।

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ १०-३६ ॥

द्यूतम् छलयताम् अस्मि तेजः तेजस्विनाम् अहम् ।
जयः अस्मि व्यवसायः अस्मि सत्त्वम् सत्त्ववताम् अहम् ॥ १०-३६ ॥

छलयताम् द्यूतम्, तेजस्विनाम् तेजः अहम् अस्मि,
जयः अहम् अस्मि, व्यवसायः ( अहम्) अस्मि, सत्त्ववताम्
सत्त्वम् ( अहम् अस्मि) ।

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ १०-३७ ॥

वृष्णीनाम् वासुदेवः अस्मि पाण्डवानाम् धनञ्जयः ।
मुनीनाम् अपि अहं व्यासः कवीनाम् उशना कविः ॥ १०-३७ ॥

वृष्णीनाम् वासुदेवः, पाण्डवानाम् धनञ्जयः अस्मि,
मुनीनाम् अपि व्यासः ( अहं) , कवीनाम् उशना कविः ( अहं अस्मि) ।

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ १०-३८ ॥

दण्डः दमयताम् अस्मि नीतिः अस्मि जिगीषताम् ।
मौनम् च एव अस्मि गुह्यानाम् ज्ञानम् ज्ञानवताम् अहम् ॥ १०-३८ ॥

दमयताम् दण्डः अस्मि, जिगीषताम् नीतिः अस्मि । गुह्यानाम्
मौनम्, ज्ञानवताम् ज्ञानम् च एव अहम् अस्मि ।

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ १०-३९ ॥

यत् च अपि सर्व-भूतानाम् बीजम् तत् अहम् अर्जुन ।
न तत् अस्ति विना यत् स्यात् मया भूतम् चर-अचरम् ॥ १०-३९ ॥

हे अर्जुन! च सर्व-भूतानाम् यत् बीजम् तत् अपि अहम् ( अस्मि) ,
यत् चर-अचरम् भूतम् स्यात् तत् मया विना न अस्ति ।

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ १०-४० ॥

न अन्तः अस्ति मम दिव्यानाम् विभूतीनाम् परन्तप ।
एषः तु उद्देशतः प्रोक्तः विभूतेः विस्तरः मया ॥ १०-४० ॥

हे परन्तप! मम दिव्यानाम् विभूतीनाम् अन्तः न अस्ति,
एषः तु विभूतेः विस्तरः मया उद्देशतः प्रोक्तः ।

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥ १०-४१ ॥

यत् यत् विभूतिमत् सत्त्वम् श्रीमत् ऊर्जितम् एव वा ।
तत् तत् अवगच्छ त्वम् मम तेजः अंश-सम्भवम् ॥ १०-४१॥

यत् यत् सत्त्वम् विभूतिमत्, श्रीमत् ऊर्जितम् एव वा
( अस्ति) , तत् तत् मम तेजः अंश-सम्भवम् ( अस्ति इति)
त्वम् अवगच्छ ।

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ १०-४२॥

अथवा बहुना एतेन किम् ज्ञातेन तव अर्जुन ।
विष्टभ्य अहम् इदम् कृत्स्नम् एक-अंशेन स्थितः जगत् ॥ १०-४२॥

हे अर्जुन! अथवा एतेन बहुना ज्ञातेन तव किम्? अहम्
इदम् कृत्स्नम् जगत् एक-अंशेन विष्टभ्य स्थितः ( अस्मि इति त्वं विद्धि) ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
विभूतियोगो नाम दशमोऽध्यायः ॥ १०॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
विभूति-योगः नाम दशमः अध्यायः ॥ १०॥

---

अथैकादशोऽध्यायः । विश्वरूपदर्शनयोगः ।
अथ एकादशः अध्यायः । विश्व-रूप-दर्शन-योगः ।

अर्जुन उवाच ।
अर्जुन उवाच ।

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ ११-१॥

मत् अनुग्रहाय परमम् गुह्यम् अध्यात्म-संज्ञितम् ।
यत् त्वया उक्तम् वचः तेन मोहः अयम् विगतः मम ॥ ११-१॥

त्वया मत् अनुग्रहाय अध्यात्म-संज्ञितम् यत् परमम्
गुह्यम् वचः उक्तम्, तेन मम अयम् मोहः विगतः ।

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ ११-२॥

भव अपि अयौ हि भूतानाम् श्रुतौ विस्तरशः मया ।
त्वत्तः कमल-पत्र-अक्ष माहात्म्यम् अपि च अव्ययम् ॥ ११-२॥

हे कमल-पत्र-अक्ष! भूतानाम् भव अपि अयौ मया त्वत्तः
विस्तरशः श्रुतौ हि; अव्ययम् माहात्म्यम् अपि च ( श्रुतं) ।

एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ११-३॥

एवम् एतत् यथा आत्थ त्वम् आत्मानं परमेश्वर ।
द्रष्टुम् इच्छामि ते रूपम् ऐश्वरम् पुरुषोत्तम ॥ ११-३॥

हे परमेश्वर! यथा एवम् त्वम् आत्मानं आत्थ, एतत्
हे पुरुषोत्तम! ते ऐश्वरम् रूपम् द्रष्टुम् इच्छामि ।

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ११-४॥

मन्यसे यदि तत् शक्यम् मया द्रष्टुम् इति प्रभो ।
योगेश्वर ततः मे त्वम् दर्शय आत्मानम् अव्ययम् ॥ ११-४॥

हे योगेश्वर प्रभो! मया तत् द्रष्टुम् शक्यम् इति त्वम्
यदि मन्यसे, ततः मे अव्ययम् आत्मानम् दर्शय ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ११-५॥

पश्य मे पार्थ रूपाणि शतशः अथ सहस्रशः ।
नाना-विधानि दिव्यानि नाना-वर्ण-आकृतीनि च ॥ ११-५ ॥

हे पार्थ! मे नाना-विधानि, नाना-वर्ण-आकृतीनि, दिव्यानि च शतशः अथ सहस्रशः रूपाणि पश्य ।

पश्यादित्यान्वसून् रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ११-६ ॥
पश्य आदित्यान् वसून् रुद्रान् अश्विनौ मरुताः तथा ।
बहूनि अदृष्ट-पूर्वाणि पश्य आश्चर्याणि भारत ॥ ११-६ ॥

हे भारत! आदित्यान्, वसून्, रुद्रान्, अश्विनौ तथा मरुताः पश्य, अदृष्ट-पूर्वाणि बहूनि आश्चर्याणि ( च) पश्य ।

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ॥ ११-७ ॥

इह एकस्थम् जगत् कृत्स्नम् पश्य अद्य सचर-अचरम् ।
मम देहे गुडाकेश यत् च अन्यत् द्रष्टुम् इच्छसि ॥ ११-७ ॥

हे गुडाकेश! कृत्स्नम् सचर-अचरम् जगत्, यत् अन्यत् च द्रष्टुम् इच्छसि, ( तत् अपि) इह मम देहे एकस्थम् अद्य पश्य ।

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ११-८ ॥

न तु माम् शक्यसे द्रष्टुम् अनेन एव स्व-चक्षुषा ।
दिव्यम् ददामि ते चक्षुः पश्य मे योगम् ऐश्वरम् ॥ ११-८ ॥

अनेन एव स्व-चक्षुषा तु माम् द्रष्टुम् न शक्यसे, ( अत एव) दिव्यम् चक्षुः ते ददामि, मे ऐश्वरम् योगम् पश्य ।

सञ्जय उवाच ।
सञ्जयः उवाच ।

एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।

दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ११-९ ॥

एवम् उक्त्वा ततः राजन् महा-योग-ईश्वरः हरिः ।
दर्शयामास पार्थाय परमम् रूपम् ऐश्वरम् ॥ ११-९ ॥

हे राजन्! एवम् उक्त्वा, ततः महा-योग-ईश्वरः हरिः पार्थाय परमम् ऐश्वरम् रूपम् दर्शयामास ।

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ ११-१० ॥

अनेक-वक्त्र-नयनम् अनेक-अद्भुत-दर्शनम् ।
अनेक-दिव्य-आभरणम् दिव्य-अनेक-उद्यत-आयुधम् ॥ ११-१० ॥

अनेक-वक्त्र-नयनम्, अनेक-अद्भुत-दर्शनम्,
अनेक-दिव्य-आभरणम्, दिव्य-अनेक-उद्यत-आयुधम्,

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११-११ ॥

दिव्य-माल्य-अम्बर-धरम् दिव्य-गन्ध-अनुलेपनम् ।
सर्व-आश्चर्यमयम् देवम् अनन्तम् विश्वतोमुखम् ॥ ११-११ ॥

दिव्य-माल्य-अम्बर-धरम्, दिव्य-गन्ध-अनुलेपनम्,
सर्व-आश्चर्यमयम्, अनन्तम्, विश्वतोमुखम्
देवम् ( अर्जुनः अपश्यत्) ।

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ ११-१२ ॥

दिवि सूर्य-सहस्रस्य भवेत् युगपत् उत्थिता ।
यदि भाः सदृशी सा स्यात् भासः तस्य महात्मनः ॥ ११-१२ ॥

यदि दिवि सूर्य-सहस्रस्य भाः युगपत् उत्थिता भवेत्,
( तर्हि) सा तस्य महात्मनः भासः सदृशी स्यात् ।

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ ११-१३ ॥

तत्र एकस्थम् जगत् कृत्स्नम् प्रविभक्तम् अनेकधा ।
अपश्यत् देव-देवस्य शरीरे पाण्डवः तदा ॥ ११-१३ ॥

पाण्डवः तदा अनेकधा प्रविभक्तम् कृत्स्नम् जगत्,
तत्र देव-देवस्य शरीरे एकस्थम् अपश्यत् ।

ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ ११-१४ ॥

ततः सः विस्मय-आविष्टः हृष्ट-रोमा धनञ्जयः ।
प्रणम्य शिरसा देवम् कृत-अञ्जलिः अभाषत ॥ ११-१४ ॥

ततः विस्मय-आविष्टः हृष्ट-रोमा सः धनञ्जयः, देवम्
शिरसा प्रणम्य, कृत-अञ्जलिः अभाषत ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ ११-१५ ॥

पश्यामि देवान् तव देव देहे
सर्वान् तथा भूत-विशेष-सङ्घान् ।
ब्रह्माणम् ईशम् कमल-आसनस्थं
ऋषीन् च सर्वान् उरगान् च दिव्यान् ॥ ११-१५ ॥

हे देव! ( अहं) तव देहे सर्वान् देवान्, तथा
भूत-विशेष-सङ्घान्, कमल-आसनस्थं ईशम्
ब्रह्माणम् च, सर्वान् ऋषीन्, दिव्यान् उरगान् च पश्यामि ।

अनेकबाहूदरवक्त्रनेत्रं

पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥ ११-१६ ॥

अनेक-बाहु-उदर-वक्त्र-नेत्रम्
पश्यामि त्वाम् सर्वतः अनन्त-रूपम् ।
न अन्तम् न मध्यम् न पुनः तव आदिम्
पश्यामि विश्वेश्वर विश्वरूप ॥ ११-१६ ॥

( अहं) त्वाम् अनेक-बाहु-उदर-वक्त्र-नेत्रम् सर्वतः
अनन्त-रूपम् पश्यामि । हे विश्वरूप विश्वेश्वर!
पुनः तव अन्तम् मध्यम् आदिम् न पश्यामि ।

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्
दीप्तानलार्कद्युतिमप्रमेयम् ॥ ११-१७ ॥

किरीटिनम् गदिनम् चक्रिणम् च
तेजो-राशिम् सर्वतः दीप्तिमन्तम् ।
पश्यामि त्वाम् दुर्निरीक्ष्यम् समन्तात्
दीप्त-अनल-अर्क-द्युतिम् अप्रमेयम् ॥ ११-१७ ॥

त्वाम् किरीटिनम्, गदिनम्, चक्रिणम्, तेजो-राशिम्
सर्वतः दीप्तिमन्तम्, समन्तात् दीप्त-अनल-अर्क-द्युतिम्
अप्रमेयम् दुर्निरीक्ष्यम् च पश्यामि ।

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ ११-१८ ॥

त्वम् अक्षरम् परमम् वेदितव्यम्
त्वम् अस्य विश्वस्य परम् निधानम् ।
त्वम् अव्ययः शाश्वत-धर्म-गोप्ता
सनातनः त्वम् पुरुषः मतः मे ॥ ११-१८ ॥

त्वम् वेदितव्यम् परमम् अक्षरम्, त्वम् अस्य विश्वस्य
परम् निधानम्, त्वम् अव्ययः शाश्वत-धर्म-गोप्ता,
त्वम् सनातनः पुरुषः मे मतः ।

अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ ११-१९ ॥

अनादि-मध्य-अन्तम् अनन्त-वीर्यम्
अनन्त-बाहुम् शशि-सूर्य-नेत्रम् ।
पश्यामि त्वाम् दीप्त-हुताश-वक्त्रम्
स्व-तेजसा विश्वम् इदम् तपन्तम् ॥ ११-१९ ॥

अनादि-मध्य-अन्तम्, अनन्त-वीर्यम्, अनन्त-बाहुम्,
शशि-सूर्य-नेत्रम्, दीप्त-हुताश-वक्त्रम्, स्व-तेजसा
इदम् विश्वम् तपन्तम्, त्वाम् पश्यामि ।

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन् ॥ ११-२० ॥

द्यावा-पृथिव्योः इदम् अन्तरम् हि
व्याप्तम् त्वया एकेन दिशः च सर्वाः ।
दृष्ट्वा अद्भुतम् रूपम् उग्रम् तव इदम्
लोक-त्रयम् प्रव्यथितम् महात्मन् ॥ ११-२० ॥

हे महात्मन्! त्वया एकेन द्यावा-पृथिव्योः इदम्
अन्तरम् व्याप्तम्, सर्वाः दिशः च ( व्याप्ताः) , इदम् तव
अद्भुतम् उग्रम् रूपम् दृष्ट्वा लोक-त्रयम् प्रव्यथितम् हि ।

अमी हि त्वां सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः

स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥११-२१॥

अमी हि त्वाम् सुर-सङ्घाः विशन्ति
केचित् भीताः प्राञ्जलयः गृणन्ति ।
स्वस्ति इति उक्त्वा महर्षि-सिद्ध-सङ्घाः
स्तुवन्ति त्वाम् स्तुतिभिः पुष्कलाभिः ॥११-२१॥

अमी हि सुर-सङ्घाः त्वाम् विशन्ति, केचित् भीताः प्राञ्जलयः गृणन्ति; महर्षि-सिद्ध-सङ्घाः स्वस्ति इति उक्त्वा पुष्कलाभिः स्तुतिभिः त्वाम् स्तुवन्ति ।

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥११-२२॥

रुद्र-आदित्याः वसवः ये च साध्याः
विश्वे अश्विनौ मरुतः च उष्मपाः च ।
गन्धर्व-यक्ष-असुर-सिद्ध-सङ्घाः
वीक्षन्ते त्वाम् विस्मिताः च एव सर्वे ॥११-२२॥

रुद्र-आदित्याः, वसवः, ये च साध्याः, विश्वे अश्विनौ च, मरुतः, उष्मपाः च, गन्धर्व-यक्ष-असुर-सिद्ध-सङ्घाः च सर्वे विस्मिताः एव त्वाम् वीक्षन्ते ।

रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥११-२३॥

रूपम् महत् ते बहु-वक्त्र-नेत्रम्
महा-बाहो बहु-बाहु-ऊरु-पादम् ।
बहु-उदरम् बहु-दंष्ट्रा-करालम्
दृष्ट्वा लोकाः प्रव्यथिताः तथा अहम् ॥११-२३॥

हे महा-बाहो! बहु-वक्त्र-नेत्रम्, बहु-बाहु-ऊरु-पादम्,

बहु-उदरम्, बहु-दंष्ट्रा-करालम् ते महत् रूपम् दृष्ट्वा
लोकाः प्रव्यथिताः, तथा अहम् ( अपि व्यथितः अस्मि) ।

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥ ११-२४ ॥

नभः-स्पृशम् दीप्तम् अनेक-वर्णम्
व्यात्त-आननम् दीप्त-विशाल-नेत्रम् ।
दृष्ट्वा हि त्वाम् प्रव्यथित-अन्तर-आत्मा
धृतिम् न विन्दामि शमम् च विष्णो ॥ ११-२४ ॥

हे विष्णो! त्वाम् नभः-स्पृशम्, दीप्तम्, अनेक-वर्णम्,
व्यात्त-आननम्, दीप्त-विशाल-नेत्रम्, दृष्ट्वा हि ( अहं)
प्रव्यथित-अन्तर-आत्मा ( भूत्वा) धृतिम् शमम् च न विन्दामि ।

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ ११-२५ ॥

दंष्ट्रा-करालानि च ते मुखानि
दृष्ट्वा एव काल-अनल-सन्निभानि ।
दिशः न जाने न लभे च शर्म
प्रसीद देवेश जगत्-निवास ॥ ११-२५ ॥

हे देवेश! हे जगत्-निवास! काल-अनल-सन्निभानि
दंष्ट्रा-करालानि च ते मुखानि दृष्ट्वा एव ( अहं) दिशः
न जाने, शर्म च न लभे, ( अतः त्वं) प्रसीद ।

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥ ११-२६ ॥
वक्त्राणि ते त्वरमाणा विशन्ति

दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ ११-२७ ॥

अमी च त्वाम् धृतराष्ट्रस्य पुत्राः
सर्वे सह एव अवनिपाल-सङ्घैः ।
भीष्मः द्रोणः सूत-पुत्रः तथा असौ
सह अस्मदीयैः अपि योध-मुख्यैः ॥ ११-२६ ॥
वक्त्राणि ते त्वरमाणाः विशन्ति
दंष्ट्रा-करालानि भयानकानि ।
केचित् विलग्नाः दशन-अन्तरेषु
सन्दृश्यन्ते चूर्णितैः उत्तम-अङ्गैः ॥ ११-२७ ॥

अमी च सर्वे धृतराष्ट्रस्य पुत्राः अवनिपाल-सङ्घैः सह एव,
तथा भीष्मः द्रोणः असौ सूत-पुत्रः अस्मदीयैः अपि योध-मुख्यैः
सह त्वाम् विशन्ति ते दंष्ट्रा-करालानि भयानकानि वक्त्राणि
त्वरमाणाः ( विशन्ति) , केचित् दशन-अन्तरेषु विलग्नाः चूर्णितैः
उत्तम-अङ्गैः ( युक्ताः) सन्दृश्यन्ते ।

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ ११-२८ ॥

यथा नदीनाम् बहवः अम्बु-वेगाः
समुद्रम् एव अभिमुखाः द्रवन्ति ।
तथा तव अमी नर-लोक-वीराः
विशन्ति वक्त्राणि अभिविज्वलन्ति ॥ ११-२८ ॥

यथा नदीनाम् बहवः अम्बु-वेगाः अभिमुखाः समुद्रम्
एव द्रवन्ति, तथा अमी नर-लोक-वीराः तव अभिविज्वलन्ति वक्त्राणि विशन्ति ।

यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकास्-
तवापि वक्त्राणि समृद्धवेगाः ॥ ११-२९ ॥

यथा प्रदीप्तम् ज्वलनम् पतङ्गाः
        विशन्ति नाशाय समृद्ध-वेगाः ।
तथा एव नाशाय विशन्ति लोकाः
        तव अपि वक्त्राणि समृद्ध-वेगाः ॥ ११-२९ ॥

यथा पतङ्गाः समृद्ध-वेगाः नाशाय प्रदीप्तम् ज्वलनम्
विशन्ति, तथा एव लोकाः समृद्ध-वेगाः नाशाय तव अपि वक्त्राणि विशन्ति ।

लेलिह्यसे ग्रसमानः समन्ताल्-
        लोकान्समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं
        भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ११-३० ॥

लेलिह्यसे ग्रसमानः समन्तात्
        लोकान् समग्रान् वदनैः ज्वलद्भिः ।
तेजोभिः आपूर्य जगत् समग्रम्
        भासः तव उग्राः प्रतपन्ति विष्णो ॥ ११-३० ॥

हे विष्णो! समन्तात् ज्वलद्भिः वदनैः समग्रान् लोकान्
ग्रसमानः ( त्वं) लेलिह्यसे, तव उग्राः भासः तेजोभिः
समग्रम् जगत् आपूर्य प्रतपन्ति ।

आख्याहि मे को भवानुग्ररूपो
        नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
        न हि प्रजानामि तव प्रवृत्तिम् ॥ ११-३१ ॥

आख्याहि मे को भवानुग्ररूपो
        नमः अस्तु ते देववर प्रसीद ।
विज्ञातुम् इच्छामि भवन्तम् आद्यम्
        न हि प्रजानामि तव प्रवृत्तिम् ॥ ११-३१ ॥

हे देववर! ते नमः अस्तु, ( त्वं) प्रसीद, भवान्
उग्र-रूपः कः ( अस्ति) ? ( तत्) मे आख्याहि । ( अहं) आद्यम्
भवन्तम् विज्ञातुम् इच्छामि ।

तव प्रवृत्तिम् हि ( अहं) न प्रजानामि ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ११-३२ ॥

कालः अस्मि लोक-क्षय-कृत् प्रवृद्धः
लोकान् समाहर्तुम् इह प्रवृत्तः ।
ऋते अपि त्वाम् न भविष्यन्ति सर्वे
ये अवस्थिताः प्रत्यनीकेषु योधाः ॥ ११-३२ ॥

( अहं) लोक-क्षय-कृत् प्रवृद्धः कालः अस्मि, इह लोकान् समाहर्तुम् प्रवृत्तः ( अस्मि) , त्वाम् ऋते अपि प्रत्यनीकेषु ये योधाः अवस्थिताः, ( ते) सर्वे न भविष्यन्ति ।

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ११-३३ ॥

तस्मात् त्वम् उत्तिष्ठ यशः लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यम् समृद्धम् ।
मया एव एते निहताः पूर्वम् एव
निमित्त-मात्रम् भव सव्य-साचिन् ॥ ११-३३ ॥

तस्मात् हे सव्य-साचिन्! त्वम् उत्तिष्ठ, यशः लभस्व, शत्रून् जित्वा समृद्धम् राज्यम् भुङ्क्ष्व । मया एव एते पूर्वम् एव निहताः, ( त्वं) निमित्त-मात्रम् भव ।

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधवीरान् ।

मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ११-३४ ॥

द्रोणम् च भीष्मम् च जयद्रथम् च
कर्णम् तथा अन्यान् अपि योध-वीरान् ।
मया हतान् त्वम् जहि मा व्यथिष्ठाः
युध्यस्व जेता असि रणे सपत्नान् ॥ ११-३४ ॥

त्वम् द्रोणम् च भीष्मम् च जयद्रथम् च कर्णम् तथा
मया हतान् अन्यान् अपि योध-वीरान् जहि, मा व्यथिष्ठाः,
युध्यस्व, रणे सपत्नान् जेता असि ।

सञ्जय उवाच ।
सञ्जयः उवाच ।

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ११-३५ ॥

एतत् श्रुत्वा वचनम् केशवस्य
कृत-अञ्जलिः वेपमानः किरीटी ।
नमस्कृत्वा भूयः एव आह कृष्णम्
सगद्गदम् भीत-भीतः प्रणम्य ॥ ११-३५ ॥

केशवस्य एतत् वचनम् श्रुत्वा, वेपमानः किरीटी
कृत-अञ्जलिः कृष्णम् नमः कृत्वा, भीत-भीतः प्रणम्य
( च) भूयः एव सगद्गदम् आह ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ११-३६ ॥

स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यति अनुरज्यते च ।
रक्षांसि भीतानि दिशः द्रवन्ति
सर्वे नमस्यन्ति च सिद्ध-सङ्घाः ॥ ११-३६ ॥

हे हृषीकेश! स्थाने, तव प्रकीर्त्या जगत् प्रहृष्यति, अनुरज्यते च, भीतानि रक्षांसि दिशः द्रवन्ति, सर्वे च सिद्ध-सङ्घाः नमस्यन्ति ।

कस्माच्च ते न नमेरन्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥ ११-३७ ॥

कस्मात् च ते न नमेरन् महात्मन्
गरीयसे ब्रह्मणः अपि आदि-कर्त्रे ।
अनन्त देवेश जगत् निवास
त्वम् अक्षरम् सत् असत् तत् परं यत् ॥ ११-३७ ॥

हे महात्मन्! अनन्त, देवेश! ब्रह्मणः अपि गरीयसे आदि-कर्त्रे( तुभ्यं) ते कस्मात् च न नमेरन्, हे जगत्-निवास! यत् सत् असत् ( अस्ति) तत् परं अक्षरम् त्वम्

त्वमादिदेवः पुरुषः पुराणस्-
त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ११-३८ ॥

त्वम् आदिदेवः पुरुषः पुराणः
त्वम् अस्य विश्वस्य परम् निधानम् ।
वेत्ता असि वेद्यम् च परम् च धाम
त्वया ततम् विश्वम् अनन्त-रूप ॥ ११-३८ ॥

त्वम् आदिदेवः, पुराणः पुरुषः, त्वम् अस्य विश्वस्य परम् निधानम्, ( त्वम्) वेत्ता च वेद्यम्। परम् धाम ह्र चासि ।

हे अनन्त-रूप! त्वया विश्वम् ततम् ।

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ११-३९ ॥

वायुः यमः अग्निः वरुणः शशाङ्कः
प्रजापतिः त्वम् प्रपितामहः च ।
नमः नमः ते अस्तु सहस्र-कृत्वः
पुनः च भूयः अपि नमः नमः ते ॥ ११-३९ ॥

त्वम् वायुः यमः अग्निः वरुणः शशाङ्कः प्रजापतिः च
प्रपितामहः ( असि) ते सहस्र-कृत्वः, नमः नमः,
पुनः च भूयः अपि ते नमः नमः अस्तु ।

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ११-४० ॥

नमः पुरस्तात् अथ पृष्ठतः ते
नमः अस्तु ते सर्वतः एव सर्व ।
अनन्त-वीर्य-अमित-विक्रमः त्वम्
सर्वम् समाप्नोषि ततः असि सर्वः ॥ ११-४० ॥

हे सर्व! ते पुरस्तात् नमः, अथ ते पृष्ठतः नमः,
( ते) सर्वतः एव ( नमः अस्तु) , हे अनन्त-वीर्य! त्वम्-अमित-विक्रमः
सर्वम् समाप्नोषि ततः सर्वः असि ।

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात्प्रणयेन वापि ॥ ११-४१ ॥
यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।

एकोऽथवाप्यच्युत तत्समक्षं
        तत्क्षामये त्वामहमप्रमेयम् ॥११-४२॥

सखा इति मत्वा प्रसभम् यत् उक्तम्
        हे कृष्ण हे यादव हे सखा इति ।
अजानता महिमानम् तव इदम्
        मया प्रमादात् प्रणयेन वा अपि ॥११-४१॥
यत् च अवहासार्थम् असत् कृतः असि
        विहार-शय्या-आसन-भोजनेषु ।
एकः अथवा अपि अच्युत तत् समक्षम्
        तत् क्षामये त्वाम् अहम् अप्रमेयम् ॥११-४२॥

तव इदम् महिमानम् अजानता मया सखा इति मत्वा, ' हे कृष्ण! हे यादव, हे सखा! ' इति प्रमादात् प्रणयेन वा अपि प्रसभम् यत् उक्तम्; हे अच्युत! यत् च विहार-शय्या-आसन-भोजनेषु, अवहासार्थम् एकः अथवा तत् समक्षम् अपि, असत् कृतः असि तत् अहम् अप्रमेयम् त्वाम् क्षामये ।

पितासि लोकस्य चराचरस्य
        त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
        लोकत्रयेऽप्यप्रतिमप्रभाव ॥११-४३॥

पिता असि लोकस्य चर-अचरस्य
        त्वम् अस्य पूज्यः च गुरुः गरीयान् ।
न त्वत् समः अस्ति अभ्यधिकः कुतः अन्यः
        लोक-त्रये अपि अप्रतिम-प्रभाव ॥११-४३॥

हे अप्रतिम-प्रभाव! त्वम् अस्य चर-अचरस्य लोकस्य पिता, गरीयान् पूज्यः गुरुः च असि, लोक-त्रये अपि त्वत् समः न अस्ति, कुतः अभ्यधिकः अन्यः?

तस्मात्प्रणम्य प्रणिधाय कायं
        प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
        प्रियः प्रियायार्हसि देव सोढुम् ॥११-४४॥

तस्मात् प्रणम्य प्रणिधाय कायम्
        प्रसादये त्वाम् अहम् ईशम् ईड्यम् ।
पिता इव पुत्रस्य सखा इव सख्युः
        प्रियः प्रियायाः अर्हसि देव सोढुम् ॥ ११-४४ ॥

हे देव! तस्मात् कायम् प्रणिधाय, प्रणम्य, अहम् ईड्यम्
ईशम् त्वाम् प्रसादये, पुत्रस्य ( अपराधं) पिता इव,
सख्युः ( अपराधं) सखा , प्रियायाः ( अपराधं) प्रियः ( इव)
( मम अपराधान्) सोढुम् अर्हसि ।

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
        भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
        प्रसीद देवेश जगन्निवास ॥ ११-४५ ॥

अदृष्ट-पूर्वम् हृषितः अस्मि दृष्ट्वा
        भयेन च प्रव्यथितम् मनः मे ।
तत् एव मे दर्शय देव रूपम्
        प्रसीद देवेश जगत्-निवास ॥ ११-४५ ॥

हे देवेश! हे जगत्-निवास! अदृष्ट-पूर्वम् ( विश्वरूपं त्वां)
दृष्ट्वा ( अहं) हृषितः अस्मि, मे मनः भयेन प्रव्यथितम् ( अस्ति, अतः)
हे देव! ( त्वं) प्रसीद च तत् एव ( पूर्वं) रूपम् मे दर्शय ।

किरीटिनं गदिनं चक्रहस्तं
        इच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
        सहस्रबाहो भव विश्वमूर्ते ॥ ११-४६ ॥

किरीटिनम् गदिनम् चक्र-हस्तम्
        इच्छामि त्वाम् द्रष्टुम् अहम् तथा एव ।
तेन एव रूपेण चतुः-भुजेन
        सहस्र-बाहो भव विश्व-मूर्ते ॥ ११-४६ ॥

हे सहस्र-बाहो! हे विश्व-मूर्ते! अहम् त्वाम् किरीटिनम्

गदिनम् ( च) तथा एव चक्र-हस्तम् द्रष्टुम् इच्छामि,
( तस्मात्) तेन एव चतुः-भुजेन रूपेण ( युक्तः) भव ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ११-४७ ॥

मया प्रसन्नेन तव अर्जुन इदम्
रूपम् परम् दर्शितम् आत्म-योगात् ।
तेजोमयम् विश्वम् अनन्तम् आद्यम्
यत् मे त्वत् अन्येन न दृष्ट-पूर्वम् ॥ ११-४७ ॥

हे अर्जुन! यत् त्वत् अन्येन दृष्ट-पूर्वम् न, ( तत्) इदम् मे
तेजोमयम् विश्वम् अनन्तम् आद्यम् परम् रूपम् प्रसन्नेन
मया आत्म-योगात् तव दर्शितम् ।

न वेदयज्ञाध्ययनैर्न दानैर्-
न च क्रियाभिर्न तपोभिरुग्रैः ।
एवं रूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ११-४८ ॥

न वेद-यज्ञ-अध्ययनैः न दानैः
न च क्रियाभिः न तपोभिः उग्रैः ।
एवम् रूपः शक्यः अहम् नृ-लोके
द्रष्टुम् त्वत् अन्येन कुरु-प्रवीर ॥ ११-४८ ॥

हे कुरु-प्रवीर! अहम् एवम् रूपः नृ-लोके न वेद-यज्ञ-अध्ययनैः
न, दानैः न, क्रियाभिः न, उग्रैः तपोभिः चन त्वत् अन्येन द्रष्टुम् शक्यः ।

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं

तदेव मे रूपमिदं प्रपश्य ॥११-४९॥

मा ते व्यथा मा च विमूढ-भावः
दृष्ट्वा रूपम् घोरम् ईदृक् मम इदम् ।
व्यपेत-भीः प्रीत-मनाः पुनः त्वम्
तत् एव मे रूपम् इदम् प्रपश्य ॥११-४९॥

मम इदम् ईदृक् घोरम् रूपम् दृष्ट्वा ते व्यथा मा ( अस्तु) , विमूढ-भावः च मा ( अस्तु) । त्वम् व्यपेत-भीः प्रीत-मनाः ( भूत्वा) पुनः तत् एव इदम् मे रूपम् प्रपश्य ।

सञ्जय उवाच ।
सञ्जयः उवाच ।

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥११-५०॥

इति अर्जुनम् वासुदेवः तथा उक्त्वा
स्वकम् रूपम् दर्शयामास भूयः ।
आश्वासयामास च भीतम् एनम्
भूत्वा पुनः सौम्य-वपुः महात्मा ॥११-५०॥

महात्मा वासुदेवः इति तथा अर्जुनम् उक्त्वा भूयः स्वकम् रूपम् दर्शयामास । पुनः च सौम्य-वपुः भूत्वा, भीतम् एनम् आश्वासयामास ।

अर्जुन उवाच
अर्जुनः उवाच ।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥११-५१॥

दृष्ट्वा इदम् मानुषम् रूपम् तव सौम्यम् जनार्दन ।
इदानीम् अस्मि संवृत्तः सचेताः प्रकृतिम् गतः ॥११-५१॥

हे जनार्दन! तव इदम् मानुषम् सौम्यम् रूपम् दृष्ट्वा
( अहं) इदानीम् सचेताः संवृत्तः अस्मि प्रकृतिम् गतः ( अस्मि) ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ११-५२ ॥

सुदुर्दर्शम् इदम् रूपम् दृष्टवान् असि यत् मम ।
देवाः अपि अस्य रूपस्य नित्यम् दर्शन-काङ्क्षिणः ॥ ११-५२ ॥

यत् मम सुदुर्दर्शम् इदम् रूपम् दृष्टवान् असि, अस्य
रूपस्य देवाः अपि नित्यम् दर्शन-काङ्क्षिणः ( सन्ति) ।

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ११-५३ ॥

न अहम् वेदैः न तपसा न दानेन न च इज्यया ।
शक्यः एवम्-विधः द्रष्टुम् दृष्टवान् असि माम् यथा ॥ ११-५३ ॥

( त्वं) यथा माम् दृष्टवान् असि, एवम्-विधः अहम् न वेदैः,
न तपसा, न दानेन, न च इज्यया द्रष्टुम् शक्यः ( अस्मि) ।

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ११-५४ ॥

भक्त्या तु अनन्यया शक्यः अहम् एवम्-विधः अर्जुन ।
ज्ञातुम् द्रष्टुम् च तत्त्वेन प्रवेष्टुम् च परन्तप ॥ ११-५४ ॥

हे परन्तप अर्जुन! अहम् एवम्-विधः तत्त्वेन ज्ञातुम् च
द्रष्टुम् प्रवेष्टुम् च अनन्यया भक्त्या तु शक्यः ।

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ११-५५ ॥

मत्-कर्म-कृत् मत्-परमः मत्-भक्तः सङ्ग-वर्जितः ।
निर्वैरः सर्व-भूतेषु यः सः माम् एति पाण्डव ॥ ११-५५ ॥

हे पाण्डव! यः मत्-कर्म-कृत्, मत्-परमः,
सङ्ग-वर्जितः सर्व-भूतेषु निर्वैरः मत्-भक्तः ( अस्ति) ,
सः माम् एति ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
विश्वरूपदर्शनयोगो नामैकादशोऽध्यायः ॥ ११ ॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
विश्व-रूप-दर्शन-योगः नाम एकादशः अध्यायः ॥ ११ ॥

---

अथ द्वादशोऽध्यायः । भक्तियोगः ।
अथ द्वादशः अध्यायः । भक्ति-योगः ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १२-१ ॥

एवम् सतत-युक्ताः ये भक्ताः त्वाम् पर्युपासते ।
ये च अपि अक्षरम् अव्यक्तम् तेषाम् के योग-वित्तमाः ॥ १२-१ ॥

( हे भगवन्) एवम् सतत-युक्ताः ये भक्ताः त्वाम् पर्युपासते,
ये च अपि अव्यक्तम् अक्षरम् ( पर्युपासते) तेषाम् ( मध्ये)
के योग-वित्तमाः ( सन्ति) ?

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।

श्रद्धया परयोपेताः ते मे युक्ततमा मताः ॥१२-२॥

मयि आवेश्य मनः ये माम् नित्य-युक्ताः उपासते ।
श्रद्धया परया उपेताः ते मे युक्ततमाः मताः ॥१२-२॥

( हे अर्जुन!) मयि मनः आवेश्य नित्य-युक्ताः ( सन्तः) ये परया
श्रद्धया उपेताः माम् उपासते, ते युक्ततमाः मे मताः ।

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥१२-३॥
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥१२-४॥

ये तु अक्षरम् अनिर्देश्यम् अव्यक्तम् पर्युपासते ।
सर्वत्रगम् अचिन्त्यम् च कूटस्थम् अचलम् ध्रुवम् ॥१२-३॥
सन्नियम्य इन्द्रिय-ग्रामम् सर्वत्र सम-बुद्धयः ।
ते प्राप्नुवन्ति माम् एव सर्व-भूत-हिते रताः ॥१२-४॥

ये तु सर्व-भूत-हिते रताः सर्वत्र सम-बुद्धयः ( सन्तः)
इन्द्रिय-ग्रामम् संनियम्य, अव्यक्तम्, अचिन्त्यम्, अनिर्देश्यम्,
सर्वत्रगम्, कूटस्थम्, अचलम्, ध्रुवम् अक्षरम् च
पर्युपासते ते माम् एव प्राप्नुवन्ति ।

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ॥
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥१२-५॥

क्लेशः अधिकतरः तेषाम् अव्यक्त-आसक्त-चेतसाम् ॥
अव्यक्ता हि गतिः दुःखम् देहवद्भिः अवाप्यते ॥१२-५॥

अव्यक्त-आसक्त-चेतसाम् तेषाम् अधिकतरः क्लेशः ( अस्ति तैः)
देहवद्भिः अव्यक्ता गतिः दुःखम् अवाप्यते हि ।

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्परः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥१२-६॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्-पराः ।

अनन्येन एव योगेन माम् ध्यायन्तः उपासते ॥१२-६॥

ये तु मत्-पराः ( सन्तः) , सर्वाणि कर्माणि मयि संन्यस्य,
माम् ध्यायन्तः अनन्येन योगेन एव उपासते,

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥१२-७॥

तेषाम् अहम् समुद्धर्ता मृत्यु-संसार-सागरात् ।
भवामि न चिरात् पार्थ मयि आवेशित-चेतसाम् ॥१२-७॥

हे पार्थ! मयि आवेशित-चेतसाम् तेषाम् मृत्यु-संसार-सागरात्
न चिरात् अहम् समुद्धर्ता भवामि ।

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥१२-८॥

मयि एव मनः आधत्स्व मयि बुद्धिम् निवेशय ।
निवसिष्यसि मयि एव अतः ऊर्ध्वम् न संशयः ॥१२-८॥

मयि एव मनः आधत्स्व्, मयि बुद्धिम् निवेशय, अतः ऊर्ध्वम्
मयि एव निवसिष्यसि, ( अत्र) संशयः न ।

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥१२-९॥

अथ चित्तम् समाधातुम् न शक्नोषि मयि स्थिरम् ।
अभ्यास-योगेन ततः माम् इच्छ आप्तुम् धनञ्जय ॥१२-९॥

हे धनञ्जय! अथ मयि स्थिरम् चित्तम् समाधातुम् न शक्नोषि,
ततः अभ्यास-योगेन माम् आप्तुम् इच्छ ।

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥१२-१०॥

अभ्यासे अपि असमर्थः असि मत्-कर्म-परमः भव ।

मत्-अर्थम् अपि कर्माणि कुर्वन् सिद्धिम् अवाप्स्यसि ॥१२-१०॥

( त्वं) अभ्यासे अपि असमर्थः असि ( चेत्) , मत्-कर्म-परमः भव,
मत्-अर्थम् कर्माणि कुर्वन् अपि सिद्धिम् अवाप्स्यसि ।

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥१२-११॥

अथ एतत् अपि अशक्तः असि कर्तुम् मत्-योगम् आश्रितः ।
सर्व-कर्म-फल-त्यागम् ततः कुरु यत-आत्मवान् ॥१२-११॥

अथ एतत् अपि कर्तुम् अशक्तः असि ( चेत्) , ततः
यत-आत्मवान् मत्-योगम् आश्रितः ( सन्)
सर्व-कर्म-फल-त्यागम् कुरु ।

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥१२-१२॥

श्रेयः हि ज्ञानम् अभ्यासात् ज्ञानात् ध्यानम् विशिष्यते ।
ध्यानात् कर्म-फल-त्यागः त्यागात् शान्तिः अनन्तरम् ॥१२-१२॥

अभ्यासात् ज्ञानम् हि श्रेयः ( अस्ति) ज्ञानात् ध्यानम् विशिष्यते;
ध्यानात् कर्म-फल-त्यागः ( विशिष्यते) ; अनन्तरम् त्यागात्
शान्तिः ( भवति) हि ।

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥१२-१३॥
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥१२-१४॥

अद्वेष्टा सर्व-भूतानां मैत्रः करुणः एव च ।
निर्ममः निरहङ्कारः सम-दुःख-सुखः क्षमी ॥१२-१३॥
सन्तुष्टः सततम् योगी यत-आत्मा दृढ-निश्चयः ।
मयि अर्पित-मनः-बुद्धिः यः मत्-भक्तः सः मे प्रियः ॥१२-१४॥

यः सर्व-भूतानां अद्वेष्टा, मैत्रः, करुणः च एव, निर्ममः,

निरहङ्कारः, सम-दुःख-सुखः क्षमी, सततम् सन्तुष्टः,
योगी, यत-आत्मा, दृढ-निश्चयः,मयि अर्पित-मनः-बुद्धिः,
सः मत्-भक्तः मे प्रियः ( अस्ति) ।

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १२-१५ ॥

यस्मात् न उद्विजते लोकः लोकात् न उद्विजते च यः ।
हर्ष-आमर्ष-भय-उद्वेगैः मुक्तः यः सः च मे प्रियः ॥ १२-१५ ॥

लोकः यस्मात् न उद्विजते, यः च लोकात् न उद्विजते, यः च
हर्ष-आमर्ष-भय-उद्वेगैः मुक्तः, सः मे प्रियः ( अस्ति) ।

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १२-१६ ॥

अनपेक्षः शुचिः दक्षः उदासीनः गत-व्यथः ।
सर्व-आरम्भ-परित्यागी यः मत्-भक्तः सः मे प्रियः ॥ १२-१६ ॥

यः मत्-भक्तः अनपेक्षः, शुचिः, दक्षः, उदासीनः,
गत-व्यथः, सर्व-आरम्भ-परित्यागी, सः मे प्रियः ।

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १२-१७ ॥

यः न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभ-अशुभ-परित्यागी भक्तिमान् यः सः मे प्रियः ॥ १२-१७ ॥

यः न हृष्यति, न द्वेष्टि, न शोचति, न काङ्क्षति,
यः शुभ-अशुभ-परित्यागी, भक्तिमान् ( अस्ति) , सः मे प्रियः ( भवति) ।

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १२-१८ ॥
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १२-१९ ॥

समः शत्रौ च मित्रे च तथा मान-अपमानयोः ।
शीत-उष्ण-सुख-दुःखेषु समः सङ्ग-विवर्जितः ॥ १२-१८॥
तुल्य-निन्दा-स्तुतिः मौनी सन्तुष्टः येन केनचित् ।
अनिकेतः स्थिर-मतिः भक्तिमान् मे प्रियः नरः ॥ १२-१९॥

( यः) शत्रौ मित्रे च तथा मान-अपमानयोः समः,
शीत-उष्ण-सुख-दुःखेषु समः, सङ्ग-विवर्जितः च ( अस्ति)
तुल्य-निन्दा-स्तुतिः, मौनी, ( यः) येन केनचित् सन्तुष्टः,
( भवति) अनिकेतः, स्थिर-मतिः, भक्तिमान् ( सः) नरः मे प्रियः ।

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ १२-२०॥

ये तु धर्म्य-अमृतम् इदम् यथा उक्तम् पर्युपासते ।
श्रद्दधानाः मत्-परमाः भक्ताः ते अतीव मे प्रियाः ॥ १२-२०॥

ये तु श्रद्दधानाः मत्-परमाः भक्ताः इदम् यथा उक्तम्
धर्म्य-अमृतम् पर्युपासते, ते मे अतीव प्रियाः ( सन्ति) ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
भक्ति-योगः नाम द्वादशः अध्यायः ॥ १२॥

---

अथ त्रयोदशोऽध्यायः । क्षेत्रक्षेत्रज्ञविभागयोगः ।
अथ त्रयोदशः अध्यायः । क्षेत्र-क्षेत्रज्ञ-विभाग-योगः ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ १३-०॥

प्रकृतिम् पुरुषम् च एव क्षेत्रम् क्षेत्रज्ञम् एव च ।

एतत् वेदितुम् इच्छामि ज्ञानम् ज्ञेयम् च केशव ॥ १३-०॥

हे केशव! प्रकृतिम् पुरुषम् च एव क्षेत्रम् क्षेत्रज्ञम् च
एव ज्ञानम् ज्ञेयम् च एतत् वेदितुम् इच्छामि ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १३-१॥

इदम् शरीरम् कौन्तेय क्षेत्रम् इति अभिधीयते ।
एतत् यः वेत्ति तम् प्राहुः क्षेत्रज्ञः इति तत्-विदः ॥ १३-१॥

हे कौन्तेय! इदम् शरीरम् क्षेत्रम् इति अभिधीयते । यः एतत्
वेत्ति, तम् क्षेत्रज्ञः इति तत्-विदः प्राहुः ।

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ १३-२॥

क्षेत्रज्ञम् च अपि माम् विद्धि सर्व-क्षेत्रेषु भारत ।
क्षेत्र-क्षेत्रज्ञयोः ज्ञानम् यत् तत् ज्ञानम् मतम् मम ॥ १३-२॥

हे भारत! सर्व-क्षेत्रेषु माम् अपि च क्षेत्रज्ञम् विद्धि । यत्
क्षेत्र-क्षेत्रज्ञयोः ज्ञानम्, तत् ज्ञानम् ( इति) मम मतम् ( अस्ति) ।

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ १३-३॥

तत् क्षेत्रम् यत् च यादृक् च यत् विकारि यतः च यत् ।
सः च यः यत् प्रभावः च तत् समासेन मे शृणु ॥ १३-३॥

तत् क्षेत्रम् यत् च, यादृक् च, यत् विकारि ( च) , यतः च यत्,
सः च यः, यत् प्रभावः च ( अस्ति) तत्, ( त्वं) समासेन मे शृणु ।

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।

ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ १३-४ ॥

ऋषिभिः बहुधा गीतम् छन्दोभिः विविधैः पृथक् ।
ब्रह्म-सूत्र-पदैः च एव हेतुमद्भिः विनिश्चितैः ॥ १३-४ ॥

( इदं ज्ञानं) ऋषिभिः बहुधा, ( तथा) विविधैः छन्दोभिः
पृथक् हेतुमद्भिः विनिश्चितैः ब्रह्म-सूत्र-पदैः च गीतम् एव ।

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ १३-५ ॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ १३-६ ॥

महा-भूतानि अहङ्कारः बुद्धिः अव्यक्तम् एव च ।
इन्द्रियाणि दश-एएकम् च पञ्च च इन्द्रिय-गोचराः ॥ १३-५ ॥
इच्छा द्वेषः सुखम् दुःखम् संघातः चेतना धृतिः ।
एतत् क्षेत्रम् समासेन सविकारम् उदाहृतम् ॥ १३-६ ॥

महा-भूतानि, अहङ्कारः, बुद्धिः, अव्यक्तम् एव च ,
दश इन्द्रियाणि च, एकम् ( मनः) इन्द्रिय-गोचराः पञ्च च,
इच्छा, द्वेषः, सुखम्, दुःखम्, संघातः, चेतना, धृतिः,
एतत् सविकारम् क्षेत्रम् ( मया) समासेन उदाहृतम् ।

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ १३-७ ॥

अमानित्वम् अदम्भित्वम् अहिंसा क्षान्तिः आर्जवम् ।
आचार्य-उपासनम् शौचम् स्थैर्यम् आत्म-विनिग्रहः ॥ १३-७ ॥

अमानित्वम्, अदम्भित्वम्, अहिंसा, क्षान्तिः, आर्जवम्,
आचार्य-उपासनम्, शौचम्, स्थैर्यम्, आत्म-विनिग्रहः,

इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ १३-८ ॥

इन्द्रिय-अर्थेषु वैराग्यम् अनहंकारः एव च ।

जन्म-मृत्यु-जरा-व्याधि-दुःख-दोष-अनुदर्शनम् ॥ १३-८ ॥

इन्द्रिय-अर्थेषु वैराग्यम्, अनहंकारः एव च,
जन्म-मृत्यु-जरा-व्याधि-दुःख-दोष-अनुदर्शनम्,

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ १३-९ ॥

असक्तिः अनभिष्वङ्गः पुत्र-दार-गृह-आदिषु ।
नित्यम् च सम-चित्तत्वम् इष्ट अनिष्ट-उपपत्तिषु ॥ १३-९ ॥

असक्तिः, पुत्र-दार-गृह-आदिषु अनभिष्वङ्गः,
इष्ट-अनिष्ट-उपपत्तिषु नित्यम् सम-चित्तत्वम् च,

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १३-१० ॥

मयि च अनन्य-योगेन भक्तिः अव्यभिचारिणी ।
विविक्त-देश-सेवित्वम् अरतिः जन-संसदि ॥ १३-१० ॥

मयि च अनन्य-योगेन अव्यभिचारिणी भक्तिः,
विविक्त-देश-सेवित्वम्, जन-संसदि अरतिः,

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ १३-११ ॥

अध्यात्म-ज्ञान-नित्यत्वम् तत्त्व-ज्ञान-अर्थ-दर्शनम् ।
एतत् ज्ञानम् इति प्रोक्तम् अज्ञानम् यत् अतः अन्यथा ॥ १३-११ ॥

अध्यात्म-ज्ञान-नित्यत्वम्, तत्त्व-ज्ञान-अर्थ-दर्शनम्,
एतत् ज्ञानम् इति प्रोक्तम्, यत् अतः अन्यथा ( तत्) अज्ञानम् ( इति प्रोक्तम्) ।

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १३-१२ ॥

ज्ञेयम् यत् तत् प्रवक्ष्यामि यत् ज्ञात्वा अमृतम् अश्नुते ।

अनादिमत् परम् ब्रह्म न सत् तत् न असत् उच्यते ॥ १३-१२ ॥

यत् ज्ञेयम्, यत् ज्ञात्वा ( जीवः) अमृतम् अश्नुते, तत् प्रवक्ष्यामि ।
तत् अनादिमत् परम् ब्रह्म सत् न, असत् ( च) न ( इति) उच्यते ।

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३-१३ ॥

सर्वतः पाणि-पादम् तत् सर्वतः अक्षि-शिरः-मुखम् ।
सर्वतः श्रुतिमत् लोके सर्वम् आवृत्य तिष्ठति ॥ १३-१३ ॥

लोके तत् सर्वतः पाणि-पादम्, सर्वतः अक्षि-शिरः-मुखम्, सर्वतः
श्रुतिमत् ( अस्ति) , सर्वम् ( च) आवृत्य तिष्ठति ।

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १३-१४ ॥

सर्व-इन्द्रिय-गुण-आभासम् सर्व-इन्द्रिय-विवर्जितम् ।
असक्तम् सर्व-भृत् च एव निर्गुणम् गुण-भोक्तृ च ॥ १३-१४ ॥

( तत्) सर्व-इन्द्रिय-गुण-आभासम्, सर्व-इन्द्रिय-विवर्जितम्,
असक्तम्, सर्व-भृत् च एव, निर्गुणम् गुण-भोक्तृ च ( अस्ति) ।

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १३-१५ ॥

बहिः-अन्तः च भूतानाम् अचरम् चरम् एव च ।
सूक्ष्मत्वात् तत् अविज्ञेयम् दूरस्थम् च अन्तिके च तत् ॥ १३-१५ ॥

तत् भूतानाम् बहिः अन्तः च ( अस्ति) , अचरम् चरम् च एव ( अस्ति) ,
तत् सूक्ष्मत्वात् अविज्ञेयम् ( अस्ति) , दूरस्थम् च अन्तिके च ( अस्ति) ।

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १३-१६ ॥

अविभक्तम् च भूतेषु विभक्तम् इव च स्थितम् ।

भूत-भर्तृ च तत् ज्ञेयम् ग्रसिष्णु प्रभविष्णु च ॥१३-१६॥

तत् ज्ञेयम् अविभक्तम् च भूतेषु विभक्तम् इव स्थितम्,
भूत-भर्तृ च ग्रसिष्णु च प्रभविष्णु च ( अस्ति) ।

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ॥१३-१७॥

ज्योतिषाम् अपि तत् ज्योतिः तमसः परम् उच्यते ।
ज्ञानम् ज्ञेयम् ज्ञानगम्यम् हृदि सर्वस्य धिष्ठितम् ॥१३-१७॥

तत् ज्योतिषाम् अपि ज्योतिः ( अस्ति) , तमसः परम् उच्यते, ( तत्)
ज्ञानम्, ज्ञेयम्, ज्ञानगम्यम् ( अस्ति) , सर्वस्य हृदि धिष्ठितम् ( अस्ति) ।

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥१३-१८॥

इति क्षेत्रम् तथा ज्ञानम् ज्ञेयम् च उक्तम् समासतः ।
मत्-भक्तः एतत् विज्ञाय मत्-भावाय उपपद्यते ॥१३-१८॥

इति क्षेत्रम्, तथा ज्ञानम् ज्ञेयम् च समासतः उक्तम्,
एतत् विज्ञाय, मत्-भक्तः मत्-भावाय उपपद्यते ।

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥१३-१९॥

प्रकृतिम् पुरुषम् च एव विद्धि अनादी उभाउ अपि ।
विकारान् च गुणान् च एव विद्धि प्रकृति-सम्भवान् ॥१३-१९॥

( त्वं) प्रकृतिम् पुरुषम् च उभाउ अपि अनादी एव विद्धि ।
विकारान् च गुणान् च प्रकृति-सम्भवान् एव विद्धि ।

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥१३-२०॥

कार्य-कारण-कर्तृत्वे हेतुः प्रकृतिः उच्यते ।

पुरुषः सुख-दुःखानाम् भोक्तृत्वे हेतुः उच्यते ॥१३-२०॥

प्रकृतिः कार्य-कारण-कर्तृत्वे हेतुः उच्यते । पुरुषः
सुख-दुःखानाम् भोक्तृत्वे हेतुः उच्यते ।

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥१३-२१॥

पुरुषः प्रकृतिस्थः हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणम् गुण-सङ्गः अस्य सत् असत् योनि-जन्मसु ॥१३-२१॥

पुरुषः प्रकृतिस्थः ( सन्) प्रकृतिजान् गुणान् भुङ्क्ते हि ।
गुण-सङ्गः अस्य सत्-असत्-योनि-जन्मसु कारणम् ( अस्ति) ।

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥१३-२२॥

उपद्रष्टा अनुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मा इति च अपि उक्तः देहे अस्मिन् पुरुषः परः ॥१३-२२॥

उपद्रष्टा, अनुमन्ता, भर्ता, च भोक्ता, महेश्वरः, अपि
च परमात्मा इति उक्तः परः पुरुषः अस्मिन् देहे ( अस्ति) ।

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥१३-२३॥

यः एवम् वेत्ति पुरुषम् प्रकृतिम् च गुणैः सह ।
सर्वथा वर्तमानः अपि न सः भूयः अभिजायते ॥१३-२३॥

यः एवम् पुरुषम् गुणैः सह प्रकृतिम् च वेत्ति, सः
सर्वथा वर्तमानः अपि भूयः न अभिजायते ।

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥१३ -२४॥

ध्यानेन आत्मनि पश्यन्ति केचित् आत्मानम् आत्मना ।

अन्ये साङ्ख्येन योगेन कर्म-योगेन च अपरे ॥ १३-२४ ॥

केचित् ध्यानेन आत्मना आत्मनि आत्मानम् पश्यन्ति ।
अन्ये साङ्ख्येन योगेन ( आत्मानम् पश्यन्ति) । अपरे च
कर्म-योगेन ( आत्मानम् पश्यन्ति) ।

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ १३-२५ ॥

अन्ये तु एवम् अजानन्तः श्रुत्वा अन्येभ्यः उपासते ।
ते अपि च अतितरन्ति एव मृत्युम् श्रुति-परायणाः ॥ १३-२५ ॥

अन्ये तु एवम् अजानन्तः अन्येभ्यः श्रुत्वा उपासते, ते
श्रुति-परायणाः च अपि मृत्युम् अतितरन्ति एव ।

यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञस। न्योगात्तद्विद्धि भरतर्षभ ॥ १३-२६ ॥

यावत् सञ्जायते किञ्चित् सत्त्वम् स्थावर-जङ्गमम् ।
क्षेत्र-क्षेत्रज्ञ-संयोगात् तत् विद्धि भरतर्षभ ॥ १३-२६ ॥

हे भरतर्षभ! यावत् किञ्चित् स्थावर-जङ्गमम् सत्त्वम्
सञ्जायते, तत् क्षेत्र-क्षेत्रज्ञ-संयोगात् ( सञ्जायते इति त्वं) विद्धि ।

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ १३-२७ ॥

समम् सर्वेषु भूतेषु तिष्ठन्तम् परमेश्वरम् ।
विनश्यत्सु अविनश्यन्तम् यः पश्यति सः पश्यति ॥ १३-२७ ॥

यः विनश्यत्सु सर्वेषु भूतेषु समम् तिष्ठन्तम् अविनश्यन्तम्
परमेश्वरम् पश्यति, सः पश्यति ।

समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ १३-२८ ॥

समं पश्यन् हि सर्वत्र समवस्थितम् ईश्वरम् ।
न हिनस्ति आत्मना आत्मानम् ततः याति पराम् गतिम् ॥१३-२८॥

( यः) सर्वत्र समवस्थितम् ईश्वरम् समं पश्यन् हि आत्मना
आत्मानम् न हिनस्ति,( सः) ततः पराम् गतिम् याति ।

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥१३-२९॥

प्रकृत्या एव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथा आत्मानम् अकर्तारम् सः पश्यति ॥१३-२९॥

यः च प्रकृत्या एव कर्माणि सर्वशः क्रियमाणानि ( सन्ति इति पश्यति) ,
तथा आत्मानम् अकर्तारम् पश्यति, सः पश्यति ।

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥१३-३०॥

यदा भूत-पृथक्-भावम् एकस्थम् अनुपश्यति ।
ततः एव च विस्तारम् ब्रह्म सम्पद्यते तदा ॥१३-३०॥

यदा भूत-पृथक्-भावम् एकस्थम् च ततः एव
विस्तारम् अनुपश्यति, तदा ब्रह्म सम्पद्यते ।

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥१३-३१॥

अनादित्वात् निर्गुणत्वात् परमात्मा अयम् अव्ययः ।
शरीरस्थः अपि कौन्तेय न करोति न लिप्यते ॥१३-३१॥

हे कौन्तेय! अयम् परमात्मा अनादित्वात्, निर्गुणत्वात्, अव्ययः
( अस्ति, अतः सः) शरीरस्थः ( सन्) अपि न करोति, न ( च) लिप्यते ।

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥१३-३२॥

यथा सर्वगतम् सौक्ष्म्यात् आकाशम् न उपलिप्यते ।
सर्वत्र-अवस्थितः देहे तथा आत्मा न उपलिप्यते ॥१३-३२॥

यथा सर्वगतम् आकाशम् सौक्ष्म्यात् न उपलिप्यते, तथा
सर्वत्र देहे अवस्थितः आत्मा न उपलिप्यते ।

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥१३-३३॥

यथा प्रकाशयति एकः कृत्स्नम् लोकम् इमम् रविः ।
क्षेत्रम् क्षेत्री तथा कृत्स्नम् प्रकाशयति भारत ॥१३-३३॥

हे भारत! यथा एकः रविः इमम् कृत्स्नम् लोकम् प्रकाशयति,
तथा क्षेत्री कृत्स्नम् क्षेत्रम् प्रकाशयति ।

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥१३-३४॥

क्षेत्र-क्षेत्रज्ञयोः एवम् अन्तरम् ज्ञान-चक्षुषा ।
भूत-प्रकृति-मोक्षम् च ये विदुः यान्ति ते परम् ॥१३-३४॥

एवम् ये ज्ञान-चक्षुषा क्षेत्र-क्षेत्रज्ञयोः अन्तरम् ( ज्ञानं)
भूत-प्रकृति-मोक्षम् च विदुः, ते परम् यान्ति ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः ॥१३॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
क्षेत्र-क्षेत्रज्ञ-विभाग-योगः नाम त्रयोदशः अध्यायः ॥१३॥

---

अथ चतुर्दशोऽध्यायः । गुणत्रयविभागयोगः ।
अथ चतुर्दशः अध्यायः । गुण-त्रय-विभाग-योगः ।

श्रीभगवानुवाच ।

श्रीभगवान् उवाच ।

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥१४-१॥

परम् भूयः प्रवक्ष्यामि ज्ञानानाम् ज्ञानम् उत्तमम् ।
यत् ज्ञात्वा मुनयः सर्वे पराम् सिद्धिम् इतः गताः ॥१४-१॥

यत् ज्ञात्वा सर्वे मुनयः इतः पराम् सिद्धिम् गताः, ( तत्)
ज्ञानानाम् उत्तमम् परम् ज्ञानम् भूयः ( अहं ते) प्रवक्ष्यामि ।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥१४-२॥

इदम् ज्ञानम् उपाश्रित्य मम साधर्म्यम् आगताः ।
सर्गे अपि न उपजायन्ते प्रलये न व्यथन्ति च ॥१४-२॥

( य) इदम् ज्ञानम् उपाश्रित्य मम साधर्म्यम् आगताः, ( ते)
सर्गे अपि न उपजायन्ते, प्रलये च न व्यथन्ति ।

मम योनिर्महद् ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥१४-३॥

मम योनिः महत् ब्रह्म तस्मिन् गर्भम् दधामि अहम् ।
सम्भवः सर्व-भूतानाम् ततः भवति भारत ॥१४-३॥

हे भारत! महत् ब्रह्म मम योनिः ( अस्ति) ; तस्मिन् अहम्
गर्भम् दधामि; ततः सर्व-भूतानाम् सम्भवः भवति ।

सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥१४-४॥

सर्व-योनिषु कौन्तेय मूर्तयः सम्भवन्ति याः ।
तासाम् ब्रह्म महत् योनिः अहम् बीज-प्रदः पिता ॥१४-४॥

हे कौन्तेय! सर्व-योनिषु याः मूर्तयः सम्भवन्ति तासाम्

योनिः महत् ब्रह्म ( अस्ति) , अहम् बीज-प्रदः पिता ( च अस्मि) ।

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ १४-५ ॥

सत्त्वम् रजः तमः इति गुणाः प्रकृति-सम्भवाः ।
निबध्नन्ति महा-बाहो देहे देहिनम् अव्ययम् ॥ १४-५ ॥

हे महा-बाहो! सत्त्वम् रजः तमः इति गुणाः प्रकृति-सम्भवाः
( सन्ति, ते) देहे अव्ययम् देहिनम् निबध्नन्ति ।

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ १४-६ ॥

तत्र सत्त्वम् निर्मलत्वात् प्रकाशकम् अनामयम् ।
सुख-सङ्गेन बध्नाति ज्ञान-सङ्गेन च अनघ ॥ १४-६ ॥

हे अनघ! तत्र अनामयम् प्रकाशकम् सत्त्वम् निर्मलत्वात्
( आत्मानं) सुख-सङ्गेन ज्ञान-सङ्गेन च बध्नाति ।

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ १४-७ ॥

रजः राग-आत्मकम् विद्धि तृष्णा-सङ्ग-समुद्भवम् ।
तत् निबध्नाति कौन्तेय कर्म-सङ्गेन देहिनम् ॥ १४-७ ॥

हे कौन्तेय! राग-आत्मकम् रजः तृष्णा-सङ्ग-समुद्भवम्
विद्धि । तत् देहिनम् कर्म-सङ्गेन निबध्नाति ।

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ १४-८ ॥

तमः तु अज्ञानजम् विद्धि मोहनम् सर्व-देहिनाम् ।
प्रमाद-आलस्य-निद्राभिः तत् निबध्नाति भारत ॥ १४-८ ॥

हे भारत! तमः तु सर्व-देहिनाम् मोहनम् अज्ञानजम् विद्धि ।

तत् ( देहिनाम्) प्रमाद-आलस्य-निद्राभिः निबध्नाति ।

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ १४-९ ॥

सत्त्वम् सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानम् आवृत्य तु तमः प्रमादे सञ्जयति उत ॥ १४-९ ॥

हे भारत! सत्त्वम् ( देहिनाम्) सुखे सञ्जयति, रजः कर्मणि,
उत तमः तु ज्ञानम् आवृत्य प्रमादे सञ्जयति ।

रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १४-१० ॥

रजः तमः च अभिभूय सत्त्वम् भवति भारत ।
रजः सत्त्वम् तमः च एव तमः सत्त्वम् रजः तथा ॥ १४-१० ॥

हे भारत! सत्त्वम्, रजः तमः एव अभिभूय ( स्वयं) भवति;
च रजः, सत्त्वम् तमः च ( अभिभूय स्वयं भवति) ; तथा तमः,
सत्त्वम् रजः ( अभिभूय स्वयं भवति) ।

सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ १४-११ ॥

सर्व-द्वारेषु देहे अस्मिन् प्रकाशः उपजायते ।
ज्ञानम् यदा तदा विद्यात् विवृद्धम् सत्त्वम् इति उत ॥ १४-११ ॥

उत यदा अस्मिन् देहे सर्व-द्वारेषु प्रकाशः ज्ञानम् ( च)
उपजायते, तदा सत्त्वम् विवृद्धम् इति विद्यात् ।

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १४-१२ ॥

लोभः प्रवृत्तिः आरम्भः कर्मणाम् अशमः स्पृहा ।
रजसि एतानि जायन्ते विवृद्धे भरतर्षभ ॥ १४-१२ ॥

हे भरतर्षभ! लोभः, प्रवृत्तिः, कर्मणाम् आरम्भः,
अशमः, स्पृहा एतानि ( चिह्नानि) रजसि विवृद्धे ( सति) जायन्ते ।

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥१४-१३॥

अप्रकाशः अप्रवृत्तिः च प्रमादः मोहः एव च ।
तमसि एतानि जायन्ते विवृद्धे कुरु-नन्दन ॥१४-१३॥

हे कुरु-नन्दन! अप्रकाशः, अप्रवृत्तिः च, प्रमादः च,
मोहः एव एतानि ( चिह्नानि) तमसि विवृद्धे ( सति) जायन्ते ।

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥१४-१४॥

यदा सत्त्वे प्रवृद्धे तु प्रलयम् याति देह-भृत् ।
तदा उत्तम-विदाम् लोकान् अमलान् प्रतिपद्यते ॥१४-१४॥

यदा तु सत्त्वे प्रवृद्धे ( सति) देह-भृत् प्रलयम् याति
तदा उत्तम-विदाम् अमलान् लोकान् प्रतिपद्यते ।

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१४-१५॥

रजसि प्रलयम् गत्वा कर्म-सङ्गिषु जायते ।
तथा प्रलीनः तमसि मूढ-योनिषु जायते ॥१४-१५॥

( देह-भृत्) रजसि प्रलयम् गत्वा कर्म-सङ्गिषु जायते ।
तथा ( सः) तमसि प्रलीनः मूढ-योनिषु जायते ।

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१४-१६॥

कर्मणः सुकृतस्य आहुः सात्त्विकम् निर्मलम् फलम् ।
रजसः तु फलम् दुःखम् अज्ञानम् तमसः फलम् ॥१४-१६॥

सुकृतस्य कर्मणः सात्त्विकम् निर्मलम् फलम्, रजसः फलम्
तु दुःखम्, तमसः ( च) फलम् अज्ञानम् ( इति) आहुः ।

सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १४-१७ ॥

सत्त्वात् सञ्जायते ज्ञानम् रजसः लोभः एव च ।
प्रमाद-मोहौ तमसः भवतः अज्ञानम् एव च ॥ १४-१७ ॥

सत्त्वात् ज्ञानम् सञ्जायते, रजसः लोभः एव च
( सञ्जायते) , तमसः प्रमाद-मोहौ भवतः, अज्ञानम् च एव
( भवति) ।

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १४-१८ ॥

ऊर्ध्वम् गच्छन्ति सत्त्वस्थाः मध्ये तिष्ठन्ति राजसाः ।
जघन्य-गुण-वृत्तिस्थाः अधः गच्छन्ति तामसाः ॥ १४-१८ ॥

सत्त्वस्थाः ऊर्ध्वम् गच्छन्ति, राजसाः मध्ये तिष्ठन्ति,
जघन्य-गुण-वृत्तिस्थाः तामसाः अधः गच्छन्ति ।

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १४-१९ ॥

न अन्यम् गुणेभ्यः कर्तारम् यदा द्रष्टा अनुपश्यति ।
गुणेभ्यः च परम् वेत्ति मत्-भावम् सः अधिगच्छति ॥ १४-१९ ॥

यदा द्रष्टा गुणेभ्यः अन्यम् कर्तारम् न अनुपश्यति, गुणेभ्यः
च परम् ( आत्मानं) वेत्ति, ( तदा) सः मत्-भावम् अधिगच्छति ।

गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ १४-२० ॥

गुणान् एतान् अतीत्य त्रीन् देही देह-समुद्भवान् ।
जन्म-मृत्यु-जरा-दुःखैः विमुक्तः अमृतम् अश्नुते ॥ १४-२० ॥

देही एतान् देह-समुद्भवान् त्रीन् गुणान् अतीत्य,
जन्म-मृत्यु-जरा-दुःखैः विमुक्तः ( सन्) अमृतम् अश्नुते ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥१४-२१॥

कैः लिङ्गैः त्रीन् गुणान् एतान् अतीतः भवति प्रभो ।
किम् आचारः कथम् च एतान् त्रीन् गुणान् अतिवर्तते ॥१४-२१॥

हे प्रभो! एतान् त्रीन् गुणान् अतीतः ( जीवः) कैः लिङ्गैः
( ज्ञातः) भवति? ( सः) च किम् आचारः? ( सः)
च एतान् त्रीन् गुणान् कथम् अतिवर्तते?

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥१४-२२॥

प्रकाशम् च प्रवृत्तिम् च मोहम् एव च पाण्डव ।
न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥१४-२२॥

हे पाण्डव! प्रकाशम् च प्रवृत्तिम् च मोहम् एव च
सम्प्रवृत्तानि न द्वेष्टि, निवृत्तानि ( च) न काङ्क्षति ।

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥१४-२३॥

उदासीनवत् आसीनः गुणैः यः न विचाल्यते ।
गुणाः वर्तन्ते इति एवम् यः अवतिष्ठति न इङ्गते ॥१४-२३॥

यः उदासीनवत् आसीनः गुणैः न विचाल्यते, यः ( च) गुणाः

वर्तन्ते इति ( मत्वा) एवम् अवतिष्ठति, ( च) न इङ्गते ।

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥१४-२४॥

सम-दुःख-सुखः स्वस्थः सम-लोष्ट-अश्म-काञ्चनः ।
तुल्य-प्रिय-अप्रियः धीरः तुल्य-निन्दा-आत्म-संस्तुतिः ॥१४-२४॥

( यः) सम-दुःख-सुखः, स्वस्थः, सम-लोष्ट-अश्म-काञ्चनः,
तुल्य-प्रिय-अप्रियः, धीरः, तुल्य-निन्दा-आत्म-संस्तुतिः,

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥१४-२५॥

मान-अपमानयोः तुल्यः तुल्यः मित्र-अरि-पक्षयोः ।
सर्व-आरम्भ-परित्यागी गुणातीतः सः उच्यते ॥१४-२५॥

( यः) मान-अपमानयोः तुल्यः, मित्र-अरि-पक्षयोः तुल्यः,
सर्व-आरम्भ-परित्यागी ( च अस्ति) सः गुणातीतः उच्यते ।

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥१४-२६॥

माम् च यः अव्यभिचारेण भक्ति-योगेन सेवते ।
सः गुणान् समतीत्य एतान् ब्रह्म-भूयाय कल्पते ॥१४-२६॥

यः माम् च अव्यभिचारेण भक्ति-योगेन सेवते, सः एतान्
गुणान् समतीत्य, ब्रह्म-भूयाय कल्पते ।

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥१४-२७॥

ब्रह्मणः हि प्रतिष्ठा अहम् अमृतस्य अव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्य एकान्तिकस्य च ॥१४-२७॥

अमृतस्य अव्ययस्य च ब्रह्मणः, शाश्वतस्य च धर्मस्य,

एकान्तिकस्य सुखस्य च हि अहम् प्रतिष्ठा ( अस्मि) ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
गुण-त्रय-विभाग-योगः नाम चतुर्दशः अध्यायः ॥ १४ ॥

---

अथ पञ्चदशोऽध्यायः । पुरुषोत्तमयोगः ।
अथ पञ्चदशः अध्यायः । पुरुषोत्तम-योगः ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १५-१ ॥

ऊर्ध्व-मूलम् अधः-शाखम् अश्वत्थम् प्राहुः अव्ययम् ।
छन्दांसि यस्य पर्णानि यः तम् वेद सः वेदवित् ॥ १५-१ ॥

छन्दांसि यस्य पर्णानि ( सन्ति तं) अश्वत्थम् ऊर्ध्व-मूलम्
अधः-शाखम् अव्ययम् प्राहुः । यः तम् वेद, सः वेदवित् ( इति उच्यते) ।

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ १५-२ ॥

अधः च ऊर्ध्वम् प्रसृताः तस्य शाखाः
गुण-प्रवृद्धाः विषय-प्रवालाः ।
अधः च मूलानि अनुसन्ततानि
कर्म-अनुबन्धीनि मनुष्य-लोके ॥ १५-२ ॥

तस्य गुण-प्रवृद्धाः विषय-प्रवालाः शाखाः अधः

ऊर्ध्वम् च प्रसृताः ( सन्ति) अधः च मनुष्य-लोके
कर्म-अनुबन्धीनि मूलानि अनुसन्ततानि ( सन्ति) ।

न रूपमस्येह तथोपलभ्यते
        नान्तो न चादिर्न च सम्प्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूलं
        असङ्गशस्त्रेण दृढेन छित्त्वा ॥ १५-३ ॥

न रूपम् अस्य इह तथा उपलभ्यते
        न अन्तः न च आदिः न च सम्प्रतिष्ठा ।
अश्वत्थम् एनम् सुविरूढ-मूलम्
        असङ्ग-शस्त्रेण दृढेन छित्त्वा ॥ १५-३ ॥

( यथा अयं वर्णितः) तथा अस्य रूपम् इह न उपलभ्यते ।
( अस्य) अन्तः न, आदिः च न, सम्प्रतिष्ठा च न ( उपलभ्यते) ,
सुविरूढ-मूलम् एनम् अश्वत्थम् दृढेन असङ्ग-शस्त्रेण छित्त्वा,

ततः पदं तत्परिमार्गितव्यं
        यस्मिन्गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये ।
        यतः प्रवृत्तिः प्रसृता पुराणी ॥ १५-४ ॥

ततः पदम् तत् परिमार्गितव्यं
        यस्मिन् गताः न निवर्तन्ति भूयः ।
तम् एव च आद्यम् पुरुषम् प्रपद्ये ।
        यतः प्रवृत्तिः प्रसृता पुराणी ॥ १५-४ ॥

ततः यतः पुराणी प्रवृत्तिः प्रसृता तम् एव च आद्यम्
पुरुषम् प्रपद्ये, ( इति) तत् पदम् परिमार्गितव्यं, यस्मिन्
गताः भूयः न निवर्तन्ति ।

निर्मानमोहा जितसङ्गदोषा
        अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्-
        गच्छन्त्यमूढाः पदमव्ययं तत् ॥ १५-५ ॥

निर्मान-मोहाः जितसङ्गदोषाः
अध्यात्म-नित्याः विनिवृत्त-कामाः ।
द्वन्द्वैः विमुक्ताः सुख-दुःख-संज्ञैः
गच्छन्ति अमूढाः पदम् अव्ययं तत् ॥ १५-५ ॥

निर्मान-मोहाः, जितसङ्गदोषाः, अध्यात्म-नित्याः,
विनिवृत्त-कामाः, सुख-दुःख-संज्ञैः द्वन्द्वैः विमुक्ताः,
अमूढाः, तत् अव्ययं पदम् गच्छन्ति ।

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ १५-६ ॥

न तत् भासयते सूर्यः न शशाङ्कः न पावकः ।
यत् गत्वा न निवर्तन्ते तत् धाम परमम् मम ॥ १५-६ ॥

न सूर्यः, न शशाङ्कः, न पावकः ( च) तत् ( पदं) भासयते ।
यत् गत्वा न निवर्तन्ते तत् मम परमम् धाम ।

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ १५-७ ॥

मम एव अंशः जीव-लोके जीव-भूतः सनातनः ।
मनः-षष्ठानि-इन्द्रियाणि प्रकृति-स्थानि कर्षति ॥ १५-७ ॥

( अस्मिन्) जीव-लोके मम एव सनातनः अंशः जीव-भूतः
( अस्ति, सः) प्रकृति-स्थानि मनः-षष्ठानि-इन्द्रियाणि कर्षति ।

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ १५-८ ॥

शरीरम् यत् अवाप्नोति यत् च अपि उत्क्रामति ईश्वरः ।
गृहीत्वा एतानि संयाति वायुः गन्धान् इव आशयात् ॥ १५-८ ॥

यत् ( एषः) ईश्वरः शरीरम् अवाप्नोति, अपि च यत् उत्क्रामति
( तत्) वायुः आशयात् गन्धान् इव, एतानि गृहीत्वा संयाति ।

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ १५-९ ॥

श्रोत्रम् चक्षुः स्पर्शनम् च रसनम् घ्राणम् एव च ।
अधिष्ठाय मनः च अयम् विषयान् उपसेवते ॥ १५-९ ॥

अयम् ( जीवः) श्रोत्रम् चक्षुः स्पर्शनम् च, रसनम्
घ्राणम् मनः च एव अधिष्ठाय विषयान् उपसेवते ।

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १५-१० ॥

उत्क्रामन्तम् स्थितम् वा अपि भुञ्जानम् वा गुण-अन्वितम् ।
विमूढाः न अनुपश्यन्ति पश्यन्ति ज्ञान-चक्षुषः ॥ १५-१० ॥

उत्क्रामन्तम् स्थितम् वा, भुञ्जानम् गुण-अन्वितम् वा अपि
विमूढाः न अनुपश्यन्ति, ज्ञान-चक्षुषः पश्यन्ति ।

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ १५-११ ॥

यतन्तः योगिनः च एनम् पश्यन्ति आत्मनि अवस्थितम् ।
यतन्तः अपि अकृत-आत्मानः न एनम् पश्यन्ति अचेतसः ॥ १५-११ ॥

यतन्तः योगिनः आत्मनि अवस्थितम् एनम् पश्यन्ति, अचेतसः
अकृत-आत्मानः च यतन्तः अपि एनम् न पश्यन्ति ।

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १५-१२ ॥

यत् आदित्य-गतं तेजः जगत् भासयते अखिलम् ।
यत् चन्द्रमसि यत् च अग्नौ तत् तेजः विद्धि मामकम् ॥ १५-१२ ॥

यत् आदित्य-गतं तेजः अखिलम् जगत् भासयते, यत् च चन्द्रमसि,
यत् च अग्नौ ( स्थितं अस्ति) , तत् मामकम् तेजः ( अस्ति इति त्वं) विद्धि ।

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १५-१३ ॥

गाम् आविश्य च भूतानि धारयामि अहम् ओजसा ।
पुष्णामि च ओषधीः सर्वाः सोमः भूत्वा रसात्मकः ॥ १५-१३ ॥

अहम् च गाम् आविश्य भूतानि ओजसा धारयामि । रसात्मकः
सोमः भूत्वा च सर्वाः ओषधीः पुष्णामि ।

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १५-१४ ॥

अहम् वैश्वानरः भूत्वा प्राणिनाम् देहम् आश्रितः ।
प्राण-अपान-सम-आयुक्तः पचामि अन्नम् चतुर्विधम् ॥ १५-१४ ॥

अहम् प्राणिनाम् देहम् आश्रितः प्राण-अपान-सम-आयुक्तः
वैश्वानरः भूत्वा चतुर्विधम् अन्नम् पचामि ।

सर्वस्य चाहं हृदि सन्निविष्टो
        मत्तः स्मृतिर्ज्ञानमपोहनञ्च ।
वेदैश्च सर्वैरहमेव वेद्यो
        वेदान्तकृद्वेदविदेव चाहम् ॥ १५-१५ ॥

सर्वस्य च अहम् हृदि सन्निविष्टः
        मत्तः स्मृतिः ज्ञानम् अपोहनम् च ।
वेदैः च सर्वैः अहम् एव वेद्यः
        वेदान्त-कृत् वेद-वित् एव च अहम् ॥ १५-१५ ॥

अहम् सर्वस्य हृदि सन्निविष्टः ( अस्मि) , मत्तः ( सर्वस्य)
स्मृतिः ज्ञानम् अपोहनम् च ( भवति) अहम् च एव
सर्वैः वेदैः वेद्यः ( अस्मि) , अहम् एव च वेदान्त-कृत्
वेद-वित् च ( अस्मि) ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १५-१६ ॥

द्वौ इमौ पुरुषौ लोके क्षरः च अक्षरः एव च ।
क्षरः सर्वाणि भूतानि कूटस्थः अक्षरः उच्यते ॥ १५-१६ ॥

( अस्मिन्) लोके क्षरः अक्षरः च एव इमौ द्वौ पुरुषौ ( स्तः) ,
सर्वाणि भूतानि क्षरः, कूटस्थः च अक्षरः उच्यते ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १५-१७ ॥

उत्तमः पुरुषः तु अन्यः परम्-आत्मा इति उदाहृतः ।
यः लोक-त्रयम् आविश्य बिभर्ति अव्ययः ईश्वरः ॥ १५-१७ ॥

उत्तमः पुरुषः तु अन्यः ( अस्ति) , ( सः) परम्-आत्मा इति
उदाहृतः यः अव्ययः ईश्वरः लोक-त्रयम् आविश्य ( तत्) बिभर्ति ।

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १५-१८ ॥

यस्मात् क्षरम् अतीतः अहम् अक्षरात् अपि च उत्तमः ।
अतः अस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १५-१८ ॥

यस्मात् अहम् क्षरम् अतीतः, अक्षरात् अपि च उत्तमः
( अस्मि) , अतः ( अहं) लोके वेदे च पुरुषोत्तमः इति प्रथितः अस्मि ।

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत॥ १५-१९ ॥

यः माम् एवम् असम्मूढः जानाति पुरुषोत्तमम् ।
सः सर्व-वित् भजति माम् सर्व-भावेन भारत ॥ १५-१९ ॥

हे भारत! यः असम्मूढः माम् पुरुषोत्तमम् एवम् जानाति,
सः सर्व-वित् ( भूत्वा) माम् सर्व-भावेन भजति ।

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ १५-२० ॥

इति गुह्यतमम् शास्त्रम् इदम् उक्तम् मया अनघ ।
एतत् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यः च भारत ॥ १५-२० ॥

हे अनघ! इति गुह्यतमम् इदम् शास्त्रम् मया उक्तम्,
हे भारत! एतत् बुद्ध्वा ( जीवः) बुद्धिमान् कृतकृत्यः च स्यात् ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादेपुरुषोत्तम-योगो
नाम पञ्चदशः अध्यायः ॥ १५ ॥

---

अथ षोडशोऽध्यायः । दैवासुरसम्पद्विभागयोगः ।
अथ षोडशः अध्यायः । दैव-आसुर-सम्पत्-विभाग-योगः ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १६-१ ॥

अभयम् सत्त्व-संशुद्धिः ज्ञान-योग-व्यवस्थितिः ।
दानम् दमः च यज्ञः च स्वाध्यायः तपः आर्जवम् ॥ १६-१ ॥

अभयम्, सत्त्व-संशुद्धिः, ज्ञान-योग-व्यवस्थितिः, दानम्,
दमः च यज्ञः च, स्वाध्यायः, तपः, आर्जवम्,

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ १६-२ ॥

अहिंसा सत्यम् अक्रोधः त्यागः शान्तिः अपैशुनम् ।
दया भूतेषु अलोलुप्त्वम् मार्दवम् ह्रीः अचापलम् ॥ १६-२ ॥

अहिंसा, सत्यम्, अक्रोधः, त्यागः, शान्तिः, अपैशुनम्,

भूतेषु दया, अलोलुप्त्वम्, मार्दवम्, ह्रीः, अचापलम्,

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥१६-३॥

तेजः क्षमा धृतिः शौचम् अद्रोहः न अति-मानिता ।
भवन्ति सम्पदम् दैवीम् अभिजातस्य भारत ॥१६-३॥

हे भारत! तेजः, क्षमा, धृतिः, शौचम्, अद्रोहः,
न अति-मानिता ( इति एतानि लक्षणानि) दैवीम् सम्पदम्
अभिजातस्य ( पुरुषस्य) भवन्ति ।

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥१६-४॥

दम्भः दर्पः अभिमानः च क्रोधः पारुष्यम् एव च ।
अज्ञानम् च अभिजातस्य पार्थ सम्पदम् आसुरीम् ॥१६-४॥

हे पार्थ! दम्भः, दर्पः, अभिमानः च, क्रोधः, पारुष्यम्,
एव च अज्ञानम् च ( एतानि लक्ष्णानि) आसुरीम् सम्पदम्
अभिजातस्य ( पुरुषस्य भवन्ति) ।

दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥१६-५॥

दैवी सम्पत् विमोक्षाय निबन्धाय आसुरी मता ।
मा शुचः सम्पदम् दैवीम् अभिजातः असि पाण्डव ॥१६-५॥

दैवी सम्पत् विमोक्षाय, आसुरी ( सम्पत् च) निबन्धाय मता ।
हे पाण्डव! ( त्वं) दैवीम् सम्पदम् अभिजातः असि, मा शुचः ।

द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥१६-६॥

द्वौ भूत-सर्गौ लोके अस्मिन् दैवः आसुरः एव च ।
दैवः विस्तरशः प्रोक्तः आसुरम् पार्थ मे शृणु ॥१६-६॥

हे पार्थ! अस्मिन् लोके दैवः आसुरः च एव द्वौ
भूत-सर्गौ ( स्तः तत्र) दैवः विस्तरशः प्रोक्तः आसुरम् मे शृणु ।

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥१६-७॥

प्रवृत्तिम् च निवृत्तिम् च जनाः न विदुः आसुराः ।
न शौचम् न अपि च आचारः न सत्यम् तेषु विद्यते ॥१६-७॥

आसुराः जनाः प्रवृत्तिम् च निवृत्तिम् च न विदुः, तेषु च
न शौचम्, न आचारः, न अपि सत्यम् विद्यते ।

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥१६-८॥

असत्यम् अप्रतिष्ठम् ते जगत् आहुः अनीश्वरम् ।
अपरस्पर-सम्भूतं किम् अन्यत् काम-हैतुकम् ॥१६-८॥

( इदं) जगत् असत्यम्, अप्रतिष्ठम्, अनीश्वरम्, अपरस्पर-सम्भूतं
काम-हैतुकम् ( च अस्ति) अन्यत् किम् ( इति) ते आहुः ।

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥१६-९॥

एताम् दृष्टिम् अवष्टभ्य नष्ट-आत्मानः अल्प-बुद्धयः ।
प्रभवन्ति उग्र-कर्माणः क्षयाय जगतः अहिताः ॥१६-९॥

एताम् दृष्टिम् अवष्टभ्य नष्ट-आत्मानः, अल्प-बुद्धयः,
उग्र-कर्माणः, अहिताः जगतः क्षयाय प्रभवन्ति ।

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वा सद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥१६-१०॥

कामम् आश्रित्य दुष्पूरम् दम्भ-मान-मद-अन्विताः ।
मोहात् गृहीत्वा असत् ग्राहान् प्रवर्तन्ते अशुचि-व्रताः ॥१६-१०॥

दुष्पूरम् कामम् आश्रित्य, मोहात् असत् ग्राहान् गृहीत्वा,
अशुचि-व्रताः दम्भ-मान-मद-अन्विताः प्रवर्तन्ते ।

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ १६-११ ॥

चिन्ताम् अपरिमेयाम् च प्रलयान्ताम् उपाश्रिताः ।
काम-उपभोग-परमाः एतावत् इति निश्चिताः ॥ १६-११ ॥

( ते) अपरिमेयाम् प्रलयान्ताम् चिन्ताम् उपाश्रिताः
काम-उपभोग-परमाः च , एतावत् इति निश्चिताः ।

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १६-१२ ॥

आशा-पाश-शतैः बद्धाः काम-क्रोध-परायणाः ।
ईहन्ते काम-भोगार्थम् अन्यायेन अर्थ-सञ्चयान् ॥ १६-१२ ॥

आशा-पाश-शतैः बद्धाः, काम-क्रोध-परायणाः,
काम-भोगार्थम् अन्यायेन अर्थ-सञ्चयान् ईहन्ते ।

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १६-१३ ॥

इदम् अद्य मया लब्धम् इमम् प्राप्स्ये मनोरथम् ।
इदम् अस्ति इदम् अपि मे भविष्यति पुनः धनम् ॥ १६-१३ ॥

अद्य इदम् मया लब्धम्, इमम् मनोरथम् ( श्वः) प्राप्स्ये,
इदम् धनम् ( अधुना) अस्ति, इदम् अपि ( धनम् च) मे पुनः
भविष्यति ।

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १६-१४ ॥

असौ मया हतः शत्रुः हनिष्ये च अपरान् अपि ।

ईश्वरः अहम् अहं भोगी सिद्धः अहम् बलवान् सुखी ॥ १६-१४ ॥

असौ शत्रुः मया हतः, अपरान् च अपि हनिष्ये, अहम् ईश्वरः,
अहं भोगी, अहम् सिद्धः, बलवान् सुखी ( च अहं अस्मि) ।

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १६-१५ ॥

आढ्यः अभिजनवान् अस्मि कः अन्यः अस्ति सदृशः मया ।
यक्ष्ये दास्यामि मोदिष्ये इति अज्ञान-विमोहिताः ॥ १६-१५ ॥

आढ्यः अभिजनवान् अस्मि, मया सदृशः कः अन्यः अस्ति?
( अहं) यक्ष्ये, दास्यामि, मोदिष्ये इति अज्ञान-विमोहिताः
( ते सन्ति) ।

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६-१६ ॥

अनेक-चित्त-विभ्रान्ताः मोह-जाल-समावृताः ।
प्रसक्ताः काम-भोगेषु पतन्ति नरके अशुचौ ॥ १६-१६ ॥

अनेक-चित्त-विभ्रान्ताः मोह-जाल-समावृताः काम-भोगेषु
प्रसक्ताः, अशुचौ नरके पतन्ति ।

आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १६-१७ ॥

आत्म-सम्भाविताः स्तब्धाः धन-मान-मद-अन्विताः ।
यजन्ते नाम-यज्ञैः ते दम्भेन अविधि-पूर्वकम् ॥ १६-१७ ॥

आत्म-सम्भाविताः स्तब्धाः धन-मान-मद-अन्विताः, ते दम्भेन
अविधि-पूर्वकम् नाम-यज्ञैः यजन्ते ।

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १६-१८ ॥

अहंकारम् बलम् दर्पम् कामम् क्रोधम् च संश्रिताः ।
माम् आत्म-पर-देहेषु प्रद्विषन्तः अभ्यसूयकाः ॥ १६-१८ ॥

अहंकारम् बलम् दर्पम् कामम् क्रोधम् च संश्रिताः
आत्म-पर-देहेषु ( स्थितं) माम् प्रद्विषन्तः अभ्यसूयकाः
( ते भवन्ति) ।

तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १६-१९ ॥

तान् अहम् द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपामि अजस्रम् अशुभान् आसुरीषु एव योनिषु ॥ १६-१९ ॥

तान् द्विषतः क्रूरान्, अशुभान्, नराधमान् संसारेषु
आसुरीषु एव योनिषु अजस्रम् अहम् क्षिपामि ।

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ १६-२० ॥

आसुरीम् योनिम् आपन्नाः मूढाः जन्मनि जन्मनि ।
माम् अप्राप्य एव कौन्तेय ततः यान्ति अधमाम् गतिम् ॥ १६-२० ॥

हे कौन्तेय! आसुरीम् योनिम् आपन्नाः जन्मनि जन्मनि मूढाः
( सन्तः) माम् अप्राप्य एव, ततः अधमाम् गतिम् यान्ति ।

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ १६-२१ ॥

त्रिविधम् नरकस्य इदम् द्वारम् नाशनम् आत्मनः ।
कामः क्रोधः तथा लोभः तस्मात् एतत् त्रयम् त्यजेत् ॥ १६-२१ ॥

कामः क्रोधः तथा लोभः इदम् त्रिविधम् आत्मनः नाशनम्
नरकस्य द्वारम् ( अस्ति) , तस्मात् एतत् त्रयम् त्यजेत् ।

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ १६-२२ ॥

एतैः विमुक्तः कौन्तेय तमो-द्वारैः त्रिभिः नरः ।
आचरति आत्मनः श्रेयः ततः याति पराम् गतिम् ॥ १६-२२॥

हे कौन्तेय! एतैः त्रिभिः तमो-द्वारैः विमुक्तः नरः, आत्मनः
श्रेयः आचरत्, ततः पराम् गतिम् याति ।

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ १६-२३॥

यः शास्त्र-विधिम् उत्सृज्य वर्तते काम-कारतः ।
न सः सिद्धिम् अवाप्नोति न सुखम् न पराम् गतिम् ॥ १६-२३॥

यः शास्त्र-विधिम् उत्सृज्य, काम-कारतः वर्तते, सः न सिद्धिम्,
न सुखम्, न ( च) पराम् गतिम् अवाप्नोति ।

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ १६-२४॥

तस्मात् शास्त्रम् प्रमाणम् ते कार्य-अकार्य-व्यवस्थितौ ।
ज्ञात्वा शास्त्र-विधान-उक्तम् कर्म कर्तुम् इह अर्हसि ॥ १६-२४॥

तस्मात् कार्य-अकार्य-व्यवस्थितौ ते शास्त्रम् प्रमाणम् ( अस्ति) ,
शास्त्र-विधान-उक्तम् कर्म ज्ञात्वा ( तत् त्वं) इह कर्तुम् अर्हसि ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
दैव-आसुर-सम्पत्-विभाग-योगः नाम षोडशः अध्यायः ॥

---

अथ सप्तदशोऽध्यायः । श्रद्धात्रयविभागयोगः
अथ सप्तदशः अध्यायः । श्रद्धा-त्रय-विभाग-योगः

अर्जुन उवाच ।
अर्जुनः उवाच ।

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥१७-१॥

ये शास्त्र-विधिम् उत्सृज्य यजन्ते श्रद्धया अन्विताः ।
तेषाम् निष्ठा तु का कृष्ण सत्त्वम् आहो रजः तमः ॥१७-१॥

हे कृष्ण! ये शास्त्र-विधिम् उत्सृज्य, श्रद्धया अन्विताः
( सन्तः) यजन्ते, तेषां तु का निष्ठा? सत्त्वम् रजः आहो तमः ?

श्रीभगवानुवाच
श्रीभगवान् उवाच ।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥१७-२॥

त्रिविधा भवति श्रद्धा देहिनाम् सा स्वभावजा ।
सात्त्विकी राजसी च एव तामसी च इति ताम् शृणु ॥१७-२॥

देहिनाम् ( या) स्वभावजा श्रद्धा, सा सात्त्विकी च राजसी ( च)
तामसी च एव इति त्रिविधा भवति, ताम् शृणु ।

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥१७-३॥

सत्त्व-अनुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयः अयम् पुरुषः यः यत् श्रद्धः सः एव सः ॥१७-३॥

हे भारत! सर्वस्य सत्त्व-अनुरूपा श्रद्धा भवति, अयम्
पुरुषः श्रद्धामयः ( अस्ति) , यः यत् श्रद्धः ( भवति) , सः एव सः ।

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥१७-४॥

यजन्ते सात्त्विकाः देवान् यक्ष-रक्षांसि राजसाः ।
प्रेतान् भूतगणान् च अन्ये यजन्ते तामसाः जनाः ॥ १७-४ ॥

सात्त्विकाः देवान् यजन्ते, राजसाः यक्ष-रक्षांसि ( यजन्ते) ,
अन्ये तामसाः जनाः प्रेतान् भूतगणान् च यजन्ते ।

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ १७-५ ॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ १७-६ ॥

अशास्त्र-विहितम् घोरम् तप्यन्ते ये तपः जनाः ।
दम्भ-अहंकार-संयुक्ताः काम-राग-बल-अन्विताः ॥ १७-५ ॥
कर्षयन्तः शरीरस्थम् भूत-ग्रामम् अचेतसः ।
माम् च एव अन्तः-शरीरस्थम् तान् विद्धि आसुर-निश्चयान् ॥ १७-६ ॥

दम्भ-अहंकार-संयुक्ताः काम-राग-बल-अन्विताः ये जनाः
अशास्त्र-विहितम् घोरम् तपः तप्यन्ते, अचेतसः च ( ये)
शरीरस्थम् भूत-ग्रामम् अन्तः-शरीरस्थम् माम् एव
कर्षयन्तः तान् आसुर-निश्चयान् विद्धि ।

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ १७-७ ॥

आहारः तु अपि सर्वस्य त्रिविधः भवति प्रियः ।
यज्ञः तपः तथा दानम् तेषाम् भेदम् इमम् शृणु ॥ १७-७ ॥

सर्वस्य प्रियः आहारः अपि तु त्रिविधः भवति, तथा यज्ञः, तपः,
दानम् ( च सर्वस्य त्रिविधं भवति, त्वं) तेषाम् इमम् भेदम् शृणु ।

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ १७-८ ॥

आयुः-सत्त्व-बल-आरोग्य-सुख-प्रीति-विवर्धनाः ।
रस्याः स्निग्धाः स्थिराः हृद्याः आहाराः सात्त्विक-प्रियाः ॥ १७-८ ॥

आयुः-सत्त्व-बल-आरोग्य-सुख-प्रीति-विवर्धनाः, रस्याः स्निग्धाः
स्थिराः हृद्याः आहाराः सात्त्विक-प्रियाः ( सन्ति) ।

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ १७-९ ॥

कट्वम्ल-लवण-अति-उष्ण-तीक्ष्ण-रूक्ष-विदाहिनः ।
आहाराः राजसस्य इष्टाः दुःख-शोक-आमय-प्रदाः ॥ १७-९ ॥

कट्वम्ल-लवण-अति-उष्ण-तीक्ष्ण-रूक्ष-विदाहिनः
दुःख-शोक-आमय-प्रदाः आहाराः राजसस्य इष्टाः ( भवति) ।

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १७-१० ॥

यातयामम् गत-रसम् पूति पर्युषितम् च यत् ।
उच्छिष्टम् अपि च अमेध्यम् भोजनम् तामस-प्रियम् ॥ १७-१० ॥

यत् यातयामम्, गत-रसम्, पूति, पर्युषितम् च उच्छिष्टम्
अपि च अमेध्यम् भोजनम् ( तत्) तामस-प्रियम् ( अस्ति) ।

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ १७-११ ॥

अफल-आकाङ्क्षिभिः यज्ञः विधि-दृष्टः यः इज्यते ।
यष्टव्यम् एव इति मनः समाधाय सः सात्त्विकः ॥ १७-११ ॥

अफल-आकाङ्क्षिभिः ( पुरुषैः) यष्टव्यम् एव इति मनः समाधाय
विधि-दृष्टः यः यज्ञः इज्यते, सः सात्त्विकः ( यज्ञः मतः) ।

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १७-१२ ॥

अभिसन्धाय तु फलम् दम्भार्थम् अपि च एव यत् ।
इज्यते भरत-श्रेष्ठ तम् यज्ञम् विद्धि राजसम् ॥ १७-१२ ॥

हे भरत-श्रेष्ठ! फलम् तु अभिसन्धाय, अपि च दम्भार्थम्
एव यत् इज्यते, तम् यज्ञम् राजसम् विद्धि ।

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १७-१३ ॥

विधि-हीनम् असृष्ट-अन्नम् मन्त्र-हीनम् अदक्षिणम् ।
श्रद्धा-विरहितम् यज्ञम् तामसम् परिचक्षते ॥ १७-१३ ॥

विधि-हीनम्, असृष्ट-अन्नम्, मन्त्र-हीनम्, अदक्षिणम्,
श्रद्धा-विरहितम्, ( च) यज्ञम् तामसम् परिचक्षते ।

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १७-१४ ॥

देव-द्विज-गुरु-प्राज्ञ-पूजनम् शौचम् आर्जवम् ।
ब्रह्मचर्यम् अहिंसा च शारीरम् तपः उच्यते ॥ १७-१४ ॥

देव-द्विज-गुरु-प्राज्ञ-पूजनम्, शौचम्, आर्जवम्,
ब्रह्मचर्यम्, अहिंसा च ( इति) शारीरम् तपः उच्यते ।

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १७-१५ ॥

अनुद्वेगकरम् वाक्यम् सत्यम् प्रिय-हितम् च यत् ।
स्वाध्याय-अभ्यसनम् च एव वाङ्मयम् तपः उच्यते ॥ १७-१५ ॥

यत् अनुद्वेगकरम् सत्यम् प्रिय-हितम् वाक्यम् च
( यत्) स्वाध्याय-अभ्यसनम् च, ( तत्) एव
वाङ्मयम् तपः ( इति) उच्यते ।

मनः प्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १७-१६ ॥

मनः-प्रसादः सौम्यत्वम् मौनम् आत्म-विनिग्रहः ।
भाव-संशुद्धिः इति एतत् तपः मानसम् उच्यते ॥ १७-१६ ॥

मनः-प्रसादः सौम्यत्वम्, मौनम्, आत्म-विनिग्रहः,
भाव-संशुद्धिः इति एतत् मानसम् तपः उच्यते ।

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७-१७ ॥

श्रद्धया परया तप्तम् तपः तत् त्रिविधम् नरैः ।
अफल-आकाङ्क्षिभिः युक्तैः सात्त्विकम् परिचक्षते ॥ १७-१७ ॥

अफल-आकाङ्क्षिभिः युक्तैः नरैः परया श्रद्धया तप्तम्
( यत्) त्रिविधम् तपः, तत् सात्त्विकम् परिचक्षते ।

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १७-१८ ॥

सत्कार-मान-पूजार्थम् तपः दम्भेन च एव यत् ।
क्रियते तत् इह प्रोक्तम् राजसम् चलम् अध्रुवम् ॥ १७-१८ ॥

सत्कार-मान-पूजार्थम् दम्भेन च एव यत् तपः क्रियते,
तत् इह राजसम्, चलम्, अध्रुवम् प्रोक्तम् ।

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १७-१९ ॥

मूढ-ग्राहेण आत्मनः यत् पीडया क्रियते तपः ।
परस्य उत्सादनार्थम् वा तत् तामसम् उदाहृतम् ॥ १७-
१९ ॥

मूढ-ग्राहेण आत्मनः पीडया परस्य उत्सादनार्थम् वा
यत् तपः क्रियते, तत् तामसम् उदाहृतम् ।

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ १७-२० ॥

दातव्यम् इति यत् दानम् दीयते अनुपकारिणे ।

देशे काले च पात्रे च तत् दानम् सात्त्विकम् स्मृतम् ॥१७-२०॥

दातव्यम् इति यत् दानम् देशे च काले च पात्रे ( च) अनुपकारिणे दीयते, तत् दानम् सात्त्विकम् स्मृतम् ।

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥१७-२१॥

यत् तु प्रति-उपकारार्थम् फलम् उद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टम् तत् दानम् राजसम् स्मृतम् ॥१७-२१॥

यत् तु प्रति-उपकारार्थम्, फलम् उद्दिश्य, वा पुनः परिक्लिष्टम् च दीयते, तत् दानम् राजसम् स्मृतम् ।

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥१७-२२॥

अदेश-काले यत् दानम् अपात्रेभ्यः च दीयते ।
असत्कृतम् अवज्ञातम् तत् तामसम् उदाहृतम् ॥१७-२२॥

यत् दानम् असत्कृतम् अवज्ञातम्, अदेश-काले अपात्रेभ्यः च दीयते, तत् तामसम् उदाहृतम् ।

ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥१७-२३॥

ॐ तत् सत् इति निर्देशः ब्रह्मणः त्रिविधः स्मृतः ।
ब्राह्मणाः तेन वेदाः च यज्ञाः च विहिताः पुरा ॥१७-२३॥

ॐ तत् सत् इति ब्रह्मणः त्रिविधः निर्देशः स्मृतः तेन ब्राह्मणाः वेदाः च यज्ञाः च पुरा विहिताः ।

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥१७-२४॥

तस्मात् ॐ इति उदाहृत्य यज्ञ-दान-तपः-क्रियाः ।

प्रवर्तन्ते विधान-उक्ताः सततम् ब्रह्म-वादिनाम् ॥ १७-२४ ॥

तस्मात् ब्रह्म-वादिनाम् विधान-उक्ताः यज्ञ-दान-तपः-क्रियाः
ॐ इति उदाहृत्य सततम् प्रवर्तन्ते ।

तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ १७-२५ ॥

तत् इति अनभिसन्धाय फलम् यज्ञ-तपः-क्रियाः ।
दान-क्रियाः च विविधाः क्रियन्ते मोक्ष-काङ्क्षिभिः ॥ १७-२५ ॥

मोक्ष-काङ्क्षिभिः तत् इति ( उदाहृत्य) फलम् अनभिसन्धाय
विविधाः यज्ञ-तपः-क्रियाः दान-क्रियाः च क्रियन्ते ।

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ १७-२६ ॥

सत्-भावे साधु-भावे च सत् इति एतत् प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सत् शब्दः पार्थ युज्यते ॥ १७-२६ ॥

( ज्ञानिभिः) सत् इति एतत् सत्-भावे च साधु-भावे च प्रयुज्यते,
तथा हे पार्थ! प्रशस्ते कर्मणि सत् शब्दः युज्यते ।

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ १७-२७ ॥

यज्ञे तपसि दाने च स्थितिः सत् इति च उच्यते ।
कर्म च एव तत्-अर्थीयम् सत् इति एव अभिधीयते ॥ १७-२७ ॥

यज्ञे तपसि दाने च स्थितिः सत् इति च उच्यते । तत्-अर्थीयम्
च एव कर्म सत् इति एव अभिधीयते ।

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ १७-२८ ॥

अश्रद्धया हुतम् दत्तम् तपः तप्तम् कृतम् च यत् ।

असत् इति उच्यते पार्थ न च तत् प्रेत्य नो इह ॥१७-२८॥

हे पार्थ! अश्रद्धया हुतम् दत्तम्, तपः तप्तम्, यत्
च कृतम्, तत् असत् इति उच्यते; ( तत्) प्रेत्य,
इह ( अपि) च न ( फलप्रदं) नो ( भवति) ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥१७॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
श्रद्धा-त्रय-विभाग-योगः नाम सप्तदशः अध्यायः ॥१७॥

---

अथाष्टादशोऽध्यायः । मोक्षसंन्यासयोगः ।
अथ अष्टादशः अध्यायः । मोक्ष-संन्यास-योगः ।

अर्जुन उवाच ।
अर्जुनः उवाच ।

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥१८-१॥

संन्यासस्य महा-बाहो तत्त्वम् इच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक् केशि-निषूदन ॥१८-१॥

हे महा-बाहो! हे केशि-निषूदन हृषीकेश ! ( अहं)
संन्यासस्य त्यागस्य च तत्त्वम् पृथक् वेदितुम् इच्छामि ।

श्रीभगवानुवाच ।
श्रीभगवान् उवाच ।

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥१८-२॥

काम्यानाम् कर्मणाम् न्यासम् संन्यासम् कवयः विदुः ।
सर्व-कर्म-फल-त्यागम् प्राहुः त्यागम् विचक्षणाः ॥१८-२॥

कवयः काम्यानाम् कर्मणाम् न्यासम् संन्यासम् विदुः,
विचक्षणाः ( च) सर्व-कर्म-फल-त्यागम् त्यागम् प्राहुः ।

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥१८-३॥

त्याज्यम् दोषवत् इति एके कर्म प्राहुः मनीषिणः ।
यज्ञ-दान-तपः-कर्म न त्याज्यम् इति च अपरे ॥१८-३॥

एके मनीषिणः कर्म दोषवत् ( अस्ति तस्मात्) त्याज्यम् इति प्राहुः,
अपरे च यज्ञ-दान-तपः-कर्म न त्याज्यम् इति ( आहुः) ।

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥१८-४॥

निश्चयम् शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागः हि पुरुष-व्याघ्र त्रिविधः सम्प्रकीर्तितः ॥१८-४॥

हे भरतसत्तम! तत्र त्यागे मे निश्चयम् शृणु ।
हे पुरुष-व्याघ्र! त्यागः हि त्रिविधः सम्प्रकीर्तितः ( अस्ति) ।

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥१८-५॥

यज्ञ-दान-तपः-कर्म न त्याज्यम् कार्यम् एव तत् ।
यज्ञः दानम् तपः च एव पावनानि मनीषिणाम् ॥१८-५॥

यज्ञ-दान-तपः-कर्म न त्याज्यम् तत् कार्यम् एव ।
यज्ञः दानम् तपः च ( एतानि) मनीषिणाम् पावनानि एव
( सन्ति) ।

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥१८-६॥

एतानि अपि तु कर्माणि सङ्गम् त्यक्त्वा फलानि च ।

कर्तव्यानि इति मे पार्थ निश्चितम् मतम् उत्तमम् ॥ १८-६ ॥

अपि तु एतानि कर्माणि सङ्गम् फलानि च त्यक्त्वा कर्तव्यानि इति, हे पार्थ! मे निश्चितम् उत्तमम् मतम् ( अस्ति) ।

नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ १८-७ ॥

नियतस्य तु संन्यासः कर्मणः न उपपद्यते ।
मोहात् तस्य परित्यागः तामसः परिकीर्तितः ॥ १८-७ ॥

नियतस्य कर्मणः तु संन्यासः न उपपद्यते ।
मोहात् तस्य परित्यागः तामसः परिकीर्तितः ।

दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ १८-८ ॥

दुःखम् इति एव यत् कर्म काय-क्लेश-भयात् त्यजेत् ।
सः कृत्वा राजसम् त्यागम् न एव त्याग-फलम् लभेत् ॥ १८-८ ॥

( यः) दुःखम् इति ( मत्वा) एव यत् कर्म काय-क्लेश-भयात् त्यजेत्, सः राजसम् त्यागम् कृत्वा त्याग-फलम् न एव लभेत् ।

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ १८-९ ॥

कार्यम् इति एव यत् कर्म नियतम् क्रियते अर्जुन ।
सङ्गम् त्यक्त्वा फलम् च एव सः त्यागः सात्त्विकः मतः ॥ १८-९ ॥

हे अर्जुन! कार्यम् इति ( मत्वा) एव यत् नियतम् कर्म, सङ्गम् फलम् च एव त्यक्त्वा क्रियते, सः त्यागः सात्त्विकः मतः ।

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १८-१० ॥

न द्वेष्टि अकुशलम् कर्म कुशले न अनुषज्जते ।

त्यागी सत्त्व-समाविष्टः मेधावी छिन्न-संशयः ॥१८-१०॥

( सः) त्यागी सत्त्व-समाविष्टः मेधावी छिन्न-संशयः
( च भवति सः) अकुशलम् कर्म न द्वेष्टि, कुशले ( च) न अनुषज्जते ।

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥१८-११॥

न हि देह-भृता शक्यम् त्यक्तुम् कर्माणि अशेषतः ।
यः तु कर्म-फल-त्यागी सः त्यागी इति अभिधीयते ॥१८-११॥

देह-भृता अशेषतः कर्माणि त्यक्तुम् न शक्यम्,
यः तु हि कर्म-फल-त्यागी सः त्यागी इति अभिधीयते ।

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥१८-१२॥

अनिष्टम् इष्टम् मिश्रम् च त्रिविधम् कर्मणः फलम् ।
भवति अत्यागिनाम् प्रेत्य न तु संन्यासिनाम् क्वचित् ॥१८-१२॥

अनिष्टम्, इष्टम्, मिश्रम् च ( इति) त्रिविधम् कर्मणः फलम्
प्रेत्य अत्यागिनाम् भवति, संन्यासिनाम् तु क्वचित् न ( भवति) ।

पञ्चैतानि महाबाहो कारणानि निबोध मे ।
साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥१८-१३॥

पञ्च एतानि महा-बाहो कारणानि निबोध मे ।
साङ्ख्ये कृत-अन्ते प्रोक्तानि सिद्धये सर्व-कर्मणाम् ॥१८-१३॥

हे महा-बाहो! सर्व-कर्मणाम् सिद्धये कृत-अन्ते साङ्ख्ये
प्रोक्तानि एतानि पञ्च कारणानि मे निबोध ।

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥१८-१४॥

अधिष्ठानम् तथा कर्ता करणम् च पृथक्-विधम् ।

विविधाः च पृथक् चेष्टाः दैवम् च एव अत्र पञ्चमम् ॥ १८-१४ ॥

अधिष्ठानम्, तथा कर्ता च, पृथक्-विधम् करणम् च,
विविधाः पृथक् चेष्टाः, अत्र दैवम् पञ्चमम् एव ( भवति) ।

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १८-१५ ॥

शरीर-वाक्-मनोभिः यत् कर्म प्रारभते नरः ।
न्याय्यम् वा विपरीतं वा पञ्च एते तस्य हेतवः ॥ १८-१५ ॥

नरः शरीर-वाक्-मनोभिः न्याय्यम् वा विपरीतं वा यत्
कर्म प्रारभते, तस्य एते पञ्च हेतवः ( सन्ति) ।

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १८-१६ ॥

तत्र एवम् सति कर्तारम् आत्मानम् केवलम् तु यः ।
पश्यति अकृत-बुद्धित्वात् न सः पश्यति दुर्मतिः ॥ १८-१६ ॥

तत्र एवम् सति यः तु केवलम् आत्मानम् कर्तारम् पश्यति,
सः दुर्मतिः अकृत-बुद्धित्वात् न पश्यति ।

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १८-१७ ॥

यस्य न अहंकृतः भावः बुद्धिः यस्य न लिप्यते ।
हत्वा अपि सः इमान् लोकान् न हन्ति न निबध्यते ॥ १८-१७ ॥

यस्य अहंकृतः भावः न, यस्य बुद्धिः न लिप्यते, सः इमान्
लोकान् हत्वा अपि न हन्ति, न निबध्यते ।

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८-१८ ॥

ज्ञानम् ज्ञेयम् परिज्ञाता त्रिविधा कर्म-चोदना ।

करणम् कर्म कर्ता इति त्रिविधः कर्म-संग्रहः ॥१८-१८॥

ज्ञानम्, ज्ञेयम्, परिज्ञाता इति त्रिविधा कर्म-चोदना ( अस्ति) ।
करणम्, कर्म, कर्ता ( इति) त्रिविधः कर्म-संग्रहः ( अस्ति) ।

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ॥१८-१९॥

ज्ञानम् कर्म च कर्ता च त्रिधा एव गुण-भेदतः ।
प्रोच्यते गुण-सङ्ख्याने यथावत् शृणु तानि अपि ॥१८-१९॥

ज्ञानम्, कर्म च कर्ता च त्रिधा एव गुण-भेदतः
गुण-सङ्ख्याने प्रोच्यते, तानि अपि यथावत् शृणु ।

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥१८-२०॥

सर्व-भूतेषु येन एकम् भावम् अव्ययम् ईक्षते ।
अविभक्तम् विभक्तेषु तत् ज्ञानम् विद्धि सात्त्विकम् ॥१८-२०॥

येन ( जीवः) विभक्तेषु सर्व-भूतेषु अविभक्तम्, एकम्
अव्ययम् भावम् ईक्षते, तत् ज्ञानम् सात्त्विकम् विद्धि ।

पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥१८-२१॥

पृथक्त्वेन तु यत् ज्ञानम् नाना-भावान् पृथक्-विधान् ।
वेत्ति सर्वेषु भूतेषु तत् ज्ञानम् विद्धि राजसम् ॥१८-२१॥

यत् ज्ञानम् पृथक्त्वेन सर्वेषु भूतेषु तु पृथक्-विधान्
नाना-भावान् वेत्ति, तत् ज्ञानम् राजसम् विद्धि ।

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥१८-२२॥

यत् तु कृत्स्नवत् एकस्मिन् कार्ये सक्तम् अहैतुकम् ।

अतत्त्वार्थवत् अल्पम् च तत् तामसम् उदाहृतम् ॥१८-२२॥

यत् तु एकस्मिन् कार्ये कृत्स्नवत् सक्तम् अहैतुकम्
अतत्त्वार्थवत् अल्पम् च, तत्( ज्ञानं) तामसम् उदाहृतम् ।

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥१८-२३॥

नियतम् सङ्ग-रहितम् अराग-द्वेषतः कृतम् ।
अफल-प्रेप्सुना कर्म यत् तत् सात्त्विकम् उच्यते ॥१८-२३॥

अफल-प्रेप्सुना यत् नियतम् कर्म सङ्ग-रहितम् अराग-द्वेषतः
कृतम्, तत् सात्त्विकम् उच्यते ।

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥१८-२४॥

यत् तु काम-ईप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुल आयासम् तत् राजसम् उदाहृतम् ॥१८-२४॥

पुनः यत् तु काम-ईप्सुना, साहंकारेण वा बहुल आयासम्
कर्म क्रियते, तत् राजसम् उदाहृतम् ।

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥१८-२५॥

अनुबन्धम् क्षयम् हिंसाम् अनपेक्ष्य च पौरुषम् ।
मोहात् आरभ्यते कर्म यत् तत् तामसम् उच्यते ॥१८-२५॥

अनुबन्धम् क्षयम् हिंसाम् पौरुषम् च अनपेक्ष्य
यत् कर्म मोहात् आरभ्यते, तत् तामसम् उच्यते ।

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥१८-२६॥

मुक्त-सङ्गः अनहं-वादी धृति-उत्साह-समन्वितः ।

सिद्धि-असिद्ध्योः निर्विकारः कर्ता सात्त्विकः उच्यते ॥ १८-२६ ॥

मुक्त-सङ्गः, अनहं-वादी, धृति-उत्साह-समन्वितः,
सिद्धि-असिद्ध्योः निर्विकारः कर्ता सात्त्विकः उच्यते ।

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ १८-२७ ॥

रागी कर्म-फल-प्रेप्सुः लुब्धः हिंसात्मकः अशुचिः ।
हर्ष-शोक-अन्वितः कर्ता राजसः परिकीर्तितः ॥ १८-२७ ॥

रागी, कर्म-फल-प्रेप्सुः, लुब्धः, हिंसात्मकः, अशुचिः,
हर्ष-शोक-अन्वितः कर्ता राजसः परिकीर्तितः ।

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ १८-२८ ॥

अयुक्तः प्राकृतः स्तब्धः शठः नैष्कृतिकः अलसः ।
विषादी दीर्घ-सूत्री च कर्ता तामसः उच्यते ॥ १८-२८ ॥

अयुक्तः, प्राकृतः, स्तब्धः, शठः, नैष्कृतिकः, अलसः,
विषादी, दीर्घ-सूत्री च कर्ता तामसः उच्यते ।

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ १८-२९ ॥

बुद्धेः भेदम् धृतेः च एव गुणतः त्रिविधम् शृणु ।
प्रोच्यमानम् अशेषेण पृथक्त्वेन धनञ्जय ॥ १८-२९ ॥

हे धनञ्जय! बुद्धेः धृतेः च एव गुणतः त्रिविधम्
भेदम् अशेषेण पृथक्त्वेन प्रोच्यमानम् शृणु ।

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ १८-३० ॥

प्रवृत्तिम् च निवृत्तिम् च कार्य-अकार्ये भय-अभये ।

बन्धम् मोक्षम् च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥१८-३०॥

हे पार्थ! या बुद्धिः प्रवृत्तिम् च निवृत्तिम् कार्य-अकार्ये
भय-अभये च बन्धम् मोक्षम् च वेत्ति, सा सात्त्विकी ( मता) ।

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥१८-३१॥

यया धर्मम् अधर्मम् च कार्यम् च अकार्यम् एव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥१८-३१॥

हे पार्थ! यया च ( बुद्ध्या जीवः) धर्मम् अधर्मम् च,
कार्यम् अकार्यम् च, अयथावत् एव प्रजानाति सा बुद्धिः राजसी ( मता) ।

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥१८-३२॥

अधर्मम् धर्मम् इति या मन्यते तमसा आवृता ।
सर्व-अर्थान् विपरीतान् च बुद्धिः सा पार्थ तामसी ॥१८-३२॥

हे पार्थ! या तमसा आवृता ( बुद्धिः) अधर्मम् धर्मम्
सर्व-अर्थान् विपरीतान् च इति मन्यते, सा बुद्धिः तामसी ( स्मृता) ।

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥१८-३३॥

धृत्या यया धारयते मनः-प्राण-इन्द्रिय-क्रियाः ।
योगेन अव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥१८-३३॥

हे पार्थ! ( नरः) यया अव्यभिचारिण्या धृत्या
मनः-प्राण-इन्द्रिय-क्रियाः योगेन धारयते, सा धृतिः सात्त्विकी ( अस्ति) ।

यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥१८-३४॥

यया तु धर्म-काम-अर्थान् धृत्या धारयते अर्जुन ।

प्रसङ्गेन फल-आकाङ्क्षी धृतिः सा पार्थ राजसी ॥ १८-३४ ॥

हे अर्जुन! यया धृत्या प्रसङ्गेन फल-आकाङ्क्षी तु ( सन्)
धर्म-काम-अर्थान् ( नरः) धारयते, हे पार्थ! सा
धृतिः राजसी ( अस्ति) ।

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ १८-३५ ॥

यया स्वप्नम् भयम् शोकम् विषादम् मदम् एव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ १८-३५ ॥

हे पार्थ! दुर्मेधा ( नरः) यया स्वप्नम्, भयम्, शोकम्,
विषादम्, मदम् एव च न विमुञ्चति, सा धृतिः तामसी ( मता) ।

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ १८-३६ ॥

सुखम् तु इदानीम् त्रिविधम् शृणु मे भरतर्षभ ।
अभ्यासात् रमते यत्र दुःखान्तम् च निगच्छति ॥ १८-३६ ॥

हे भरतर्षभ! इदानीम् तु त्रिविधम् सुखम् मे शृणु,
यत्र ( सुखे जीवः) अभ्यासात् रमते, दुःखान्तम् च निगच्छति ।

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ १८-३७ ॥

यत् तत् अग्रे विषम् इव परिणामे अमृत-उपमम् ।
तत् सुखम् सात्त्विकम् प्रोक्तम् आत्म-बुद्धि-प्रसादजम् ॥ १८-३७ ॥

यत् अग्रे विषम् इव, परिणामे अमृत-उपमम् तत्
आत्म-बुद्धि-प्रसादजम् ( अस्ति) , तत् सुखम् सात्त्विकम् प्रोक्तम् ।

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ १८-३८ ॥

विषय-इन्द्रिय-संयोगात् यत् तत् अग्रे अमृत-उपमम् ।
परिणामे विषम् इव तत् सुखम् राजसम् स्मृतम् ॥ १८-३८ ॥

यत् विषय-इन्द्रिय-संयोगात् अग्रे अमृत-उपमम्, तत्
परिणामे ( च) विषम् इव ( अस्ति) तत् सुखम् राजसम् स्मृतम् ।

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ १८-३९ ॥

यत् अग्रे च अनुबन्धे च सुखम् मोहनम् आत्मनः ।
निद्रा-आलस्य-प्रमाद-उत्थम् तत् तामसम् उदाहृतम् ॥ १८-३९ ॥

यत् अग्रे च अनुबन्धे च आत्मनः मोहनम् निद्रा-आलस्य-प्रमाद-उत्थम्,
तत् सुखम् तामसम् उदाहृतम् ।

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ १८-४० ॥

न तत् अस्ति पृथिव्याम् वा दिवि देवेषु वा पुनः ।
सत्त्वम् प्रकृतिजैः मुक्तम् यत् एभिः स्यात् त्रिभिः गुणैः ॥ १८-४० ॥

यत् सत्त्वम् एभिः प्रकृतिजैः त्रिभिः गुणैः मुक्तम् स्यात्, तत्
पृथिव्याम् वा दिवि वा पुनः देवेषु ( वा) न अस्ति ।

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ १८-४१ ॥

ब्राह्मण-क्षत्रिय-विशाम् शूद्राणाम् च परन्तप ।
कर्माणि प्रविभक्तानि स्वभाव-प्रभवैः गुणैः ॥ १८-४१ ॥

हे परन्तप! ब्राह्मण-क्षत्रिय-विशाम् शूद्राणाम् च
कर्माणि स्वभाव-प्रभवैः गुणैः प्रविभक्तानि ( सन्ति) ।

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ १८-४२ ॥

शमः दमः तपः शौचम् क्षान्तिः आर्जवम् एव च ।
ज्ञानम् विज्ञानम् आस्तिक्यम् ब्रह्म-कर्म स्वभावजम् ॥१८-४२॥

शमः, दमः, तपः, शौचम्, क्षान्तिः, आर्जवम्, ज्ञानम्,
विज्ञानम्, आस्तिक्यम् एव च ( इति) स्वभावजम् ब्रह्म-कर्म ( अस्ति) ।

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥१८-४३॥

शौर्यम् तेजः धृतिः दाक्ष्यम् युद्धे च अपि अपलायनम् ।
दानम् ईश्वर-भावः च क्षात्रम् कर्म स्वभावजम् ॥१८-४३॥

शौर्यम्, तेजः, धृतिः, दाक्ष्यम्, युद्धे अपि च अपलायनम्,
दानम्, ईश्वर-भावः च ( इति) स्वभावजम् क्षात्रम् कर्म ( अस्ति) ।

कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥१८-४४॥

कृषि-गौरक्ष्य-वाणिज्यम् वैश्य-कर्म स्वभावजम् ।
परिचर्या-आत्मकम् कर्म शूद्रस्य अपि स्वभावजम् ॥१८-४४॥

कृषि-गौरक्ष्य-वाणिज्यम् स्वभावजम् वैश्य-कर्म ( अस्ति)
अपि ( च) शूद्रस्य परिचर्या-आत्मकम् कर्म स्वभावजम् ( अस्ति) ।

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥१८-४५॥

स्वे स्वे कर्मणि अभिरतः संसिद्धिम् लभते नरः ।
स्वकर्म-निरतः सिद्धिम् यथा विन्दति तत् शृणु ॥१८-४५॥

स्वे स्वे कर्मणि अभिरतः नरः संसिद्धिम् लभते ।
स्वकर्म-निरतः ( नरः) यथा सिद्धिम् विन्दति, तत् शृणु ।

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥१८-४६॥

यतः प्रवृत्तिः भूतानाम् येन सर्वम् इदम् ततम् ।
स्वकर्मणा तम् अभ्यर्च्य सिद्धिम् विन्दति मानवः ॥ १८-४६ ॥

यतः भूतानाम् प्रवृत्तिः ( अस्ति) , येन इदम् सर्वम् ततम्
( अस्ति) तम् ( ईश्वरं) स्वकर्मणा अभ्यर्च्य मानवः सिद्धिम् विन्दति ।

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ १८-४७ ॥

श्रेयान् स्वधर्मः विगुणः पर-धर्मात् स्वनुष्ठितात् ।
स्वभाव-नियतम् कर्म कुर्वन् न आप्नोति किल्बिषम् ॥ १८-४७ ॥

विगुणः स्वधर्मः स्वनुष्ठितात् पर-धर्मात् श्रेयान् ( अस्ति) ,
स्वभाव-नियतम् कर्म कुर्वन् ( नरः) किल्बिषम् न आप्नोति ।

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ १८-४८ ॥

सहजम् कर्म कौन्तेय सदोषम् अपि न त्यजेत् ।
सर्वारम्भाः हि दोषेण धूमेन अग्निः इव आवृताः ॥ १८-४८ ॥

हे कौन्तेय! सहजम् कर्म सदोषम् अपि न त्यजेत्,
धूमेन अग्निः इव हि सर्वारम्भाः दोषेण आवृताः ( सन्ति) ।

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ १८-४९ ॥

असक्त-बुद्धिः सर्वत्र जित-आत्मा विगत-स्पृहः ।
नैष्कर्म्य-सिद्धिम् परमाम् संन्यासेन अधिगच्छति ॥ १८-४९ ॥

सर्वत्र असक्त-बुद्धिः जित-आत्मा, विगत-स्पृहः ( नरः)
परमाम् नैष्कर्म्य-सिद्धिम् संन्यासेन अधिगच्छति ।

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ १८-५० ॥

सिद्धिम् प्राप्तः यथा ब्रह्म तथा आप्नोति निबोध मे ।
समासेन एव कौन्तेय निष्ठा ज्ञानस्य या परा ॥१८-५०॥

हे कौन्तेय! सिद्धिम् प्राप्तः ( मानवः) यथा ब्रह्म आप्नोति,
तथा मे समासेन एव निबोध, या ( च इयं ब्रह्म-प्राप्तिः)
( सा) ज्ञानस्य परा निष्ठा ( वर्तते) ।

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥१८-५१॥

बुद्ध्या विशुद्धया युक्तः धृत्या आत्मानम् नियम्य च ।
शब्दादीन् विषयान् त्यक्त्वा राग-द्वेषौ व्युदस्य च ॥१८-५१॥

विशुद्धया बुद्ध्या युक्तः, धृत्या आत्मानम् नियम्य च,
शब्दादीन् विषयान् त्यक्त्वा, राग-द्वेषौ च व्युदस्य,

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥१८-५२॥

विविक्त-सेवी लघु-आशी यत-वाक्-काय-मानसः ।
ध्यान-योग-परः नित्यम् वैराग्यम् समुपाश्रितः ॥१८-५२॥

विविक्त-सेवी, लघु-आशी, यत-वाक्-काय-मानसः, नित्यम्
ध्यान-योग-परः, वैराग्यम् समुपाश्रितः ( च) ,

अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥१८-५३॥

अहंकारम् बलम् दर्पम् कामम् क्रोधम् परिग्रहम् ।
विमुच्य निर्ममः शान्तः ब्रह्म-भूयाय कल्पते ॥१८-५३॥

अहंकारम् बलम् दर्पम् कामम् क्रोधम् परिग्रहम् ( च)
विमुच्य, निर्ममः, शान्तः, ( नरः) ब्रह्म-भूयाय कल्पते ।

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥१८-५४॥

ब्रह्म-भूतः प्रसन्न-आत्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मत्-भक्तिम् लभते पराम् ॥१८-५४॥

ब्रह्म-भूतः प्रसन्न-आत्मा ( सन्) न शोचति, न काङ्क्षति,
( च) सर्वेषु भूतेषु समः ( भूत्वा) पराम् मत्-भक्तिम् लभते ।

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥१८-५५॥

भक्त्या माम् अभिजानाति यावान् यः च अस्मि तत्त्वतः ।
ततः माम् तत्त्वतः ज्ञात्वा विशते तत् अनन्तरम् ॥१८-५५॥

यावान् यः च अस्मि, ( तं) माम् तत्त्वतः भक्त्या अभिजानाति,
ततः तत्त्वतः माम् ज्ञात्वा तत् अनन्तरम् ( माम्) विशते ।

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥१८-५६॥

सर्व-कर्माणि अपि सदा कुर्वाणः मत्-व्यपाश्रयः ।
मत्-प्रसादात् अवाप्नोति शाश्वतम् पदम् अव्ययम् ॥१८-५६॥

मत्-व्यपाश्रयः सदा सर्व-कर्माणि अपि कुर्वाणः
मत्-प्रसादात् शाश्वतम् अव्ययम् पदम् अवाप्नोति ।

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥१८-५७॥

चेतसा सर्व-कर्माणि मयि संन्यस्य मत्-परः ।
बुद्धि-योगम् उपाश्रित्य मत्-चित्तः सततम् भव ॥१८-५७॥

( त्वं) सर्व-कर्माणि चेतसा मयि संन्यस्य, मत्-परः
( सन्) , बुद्धि-योगम् उपाश्रित्य,सततम् मत्-चित्तः भव ।

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥१८-५८॥

मत्-चित्तः सर्व-दुर्गाणि मत्-प्रसादात् तरिष्यसि ।
अथ चेत् त्वम् अहंकारात् न श्रोष्यसि विनङ्क्ष्यसि ॥ १८-५८॥

( त्वम्) मत्-चित्तः ( सन्) सर्व-दुर्गाणि मत्-प्रसादात्
तरिष्यसि । अथ त्वम् अहंकारात् न श्रोष्यसि चेत्, विनङ्क्ष्यसि ।

यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ १८-५९॥

यत् अहंकारम् आश्रित्य न योत्स्ये इति मन्यसे ।
मिथ्या एषः व्यवसायः ते प्रकृतिः त्वाम् नियोक्ष्यति ॥ १८-५९॥

यत् अहंकारम् आश्रित्य ' न योत्स्ये' इति मन्यसे, ( तत्) एषः
ते व्यवसायः मिथ्या ( एव अस्ति) , प्रकृतिः त्वाम् नियोक्ष्यति ।

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ १८-६०॥

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुम् न इच्छसि यत् मोहात् करिष्यसि अवशः अपि तत् ॥ १८-६०॥

हे कौन्तेय! ( यतः) स्वभावजेन स्वेन कर्मणा निबद्धः
( त्वं) यत् मोहात् कर्तुम् न इच्छसि, तत् अवशः ( सन्)
अपि करिष्यसि ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ १८-६१॥

ईश्वरः सर्व-भूतानाम् हृत्-देशे अर्जुन तिष्ठति ।
भ्रामयन् सर्व-भूतानि यन्त्र-आरूढानि मायया ॥ १८-६१॥

हे अर्जुन! यन्त्र-आरूढानि सर्व-भूतानि मायया
भ्रामयन् ईश्वरः सर्व-भूतानाम् हृत्-देशे तिष्ठति ।

तमेव शरणं गच्छ सर्वभावेन भारत ।

तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥१८-६२॥

तम् एव शरणम् गच्छ सर्व-भावेन भारत ।
तत् प्रसादात् पराम् शान्तिम् स्थानम् प्राप्स्यसि शाश्वतम् ॥१८-६२॥

हे भारत! ( त्वं) तम् एव सर्व-भावेन शरणम् गच्छ ।
तत् प्रसादात् पराम् शान्तिम् शाश्वतम् स्थानम् ( च) प्राप्स्यसि ।

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥१८-६३॥

इति ते ज्ञानम् आख्यातम् गुह्यात् गुह्यतरं मया ।
विमृश्य एतत् अशेषेण यथा इच्छसि तथा कुरु ॥१८-६३॥

इति गुह्यात् गुह्यतरं ज्ञानम् मया ते आख्यातम्,
एतत् अशेषेण विमृश्य, यथा इच्छसि तथा कुरु ।

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥१८-६४॥

सर्व-गुह्यतमम् भूयः शृणु मे परमम् वचः ।
इष्टः असि मे दृढम् इति ततः वक्ष्यामि ते हितम् ॥१८-६४॥

सर्व-गुह्यतमम् परमम् वचः मे भूयः शृणु । मे दृढम्
इष्टः असि, इति ततः ते हितम् वक्ष्यामि ।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥१८-६५॥

मत्-मनाः भव मत्-भक्तः मत्-याजी माम् नमस्कुरु ।
माम् एव एष्यसि सत्यम् ते प्रतिजाने प्रियः असि मे ॥१८-६५॥

मत्-मनाः, मत्-भक्तः, मत्-याजी ( च) भव, माम्
नमस्कुरु ( एवं कृत्वा त्वं) माम् एव एष्यसि । ( इति) ते
सत्यम् प्रतिजाने, ( यतः त्वं) मे प्रियः असि ।

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षययिष्यामि मा शुचः ॥१८-६६॥

सर्व-धर्मान् परित्यज्य माम् एकम् शरणम् व्रज ।
अहम् त्वा सर्व-पापेभ्यः मोक्षययिष्यामि मा शुचः ॥१८-६६॥

( त्वं) सर्व-धर्मान् परित्यज्य माम् एकम् शरणम् व्रज ,
अहम् त्वा सर्व-पापेभ्यः मोक्षययिष्यामि, ( त्वं) मा शुचः ।

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥१८-६७॥

इदम् ते न अतपस्काय न अभक्ताय कदाचन ।
न च अशुश्रूषवे वाच्यम् न च माम् यः अभ्यसूयति ॥१८-६७॥

इदम् ते न अतपस्काय, ( च) न अभक्ताय, न च अशुश्रूषवे,
न च यः माम् अभ्यसूयति ( तस्मै) कदाचन वाच्यम् ।

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥१८-६८॥

यः इदम् परमम् गुह्यम् मत्-भक्तेषु अभिधास्यति ।
भक्तिम् मयि पराम् कृत्वा माम् एव एष्यति असंशयः ॥१८-६८॥

यः इदम् परमम् गुह्यम् ( ज्ञानं) मत्-भक्तेषु अभिधास्यति,
( सः) मयि पराम् भक्तिम् कृत्वा, असंशयः ( सन्) माम्
एव एष्यति ।

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥१८-६९॥

न च तस्मात् मनुष्येषु कश्चित् मे प्रिय-कृत्तमः ।
भविता न च मे तस्मात् अन्यः प्रियतरः भुवि ॥१८-६९॥

मनुष्येषु च कश्चित् तस्मात् प्रिय-कृत्तमः मे न ( अस्ति) ;
तस्मात् अन्यः भुवि प्रियतरः च मे न भविता ।

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ १८-७० ॥

अध्येष्यते च यः इमम् धर्म्यम् संवादम् आवयोः ।
ज्ञान-यज्ञेन तेन अहम् इष्टः स्याम् इति मे मतिः ॥ १८-७० ॥

यः च आवयोः इमम् धर्म्यम् संवादम् अध्येष्यते, तेन
ज्ञान-यज्ञेन अहम् इष्टः स्याम् इति मे मतिः ।

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ १८-७१ ॥

श्रद्धावान् अनसूयः च शृणुयात् अपि यः नरः ।
सः अपि मुक्तः शुभान् लोकान् प्राप्नुयात् पुण्य-कर्मणाम् ॥ १८-७१ ॥

श्रद्धावान् अनसूयः च यः नरः ( इदं) शृणुयात् अपि सः
मुक्तः ( सन्) पुण्य-कर्मणाम् शुभान् लोकान् अपि प्राप्नुयात् ।

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय ॥ १८-७२ ॥

कच्चित् एतत् श्रुतम् पार्थ त्वया एकाग्रेण चेतसा ।
कच्चित् अज्ञान-सम्मोहः प्रनष्टः ते धनञ्जय ॥ १८-७२ ॥

हे पार्थ! त्वया एतत् एकाग्रेण चेतसा श्रुतम् कच्चित्?
हे धनञ्जय! ते अज्ञान-सम्मोहः प्रनष्टः कच्चित्?

अर्जुन उवाच ।
अर्जुनः उवाच ।

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ १८-७३ ॥

नष्टः मोहः स्मृतिः लब्धा त्वत् प्रसादात् मया अच्युत ।
स्थितः अस्मि गत-सन्देहः करिष्ये वचनम् तव ॥ १८-७३ ॥

हे अच्युत! त्वत् प्रसादात् ( मे) मोहः नष्टः,
मया स्मृतिः लब्धा, ( अहं) गत-सन्देहः स्थितः अस्मि,
( इदानीं) तव वचनम् करिष्ये ।

सञ्जय उवाच ।
सञ्जयः उवाच ।

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ १८-७४ ॥

इति अहम् वासुदेवस्य पार्थस्य च महात्मनः ।
संवादम् इमम् अश्रौषम् अद्भुतम् रोम-हर्षणम् ॥ १८-७४ ॥

इति अहम् वासुदेवस्य महात्मनः पार्थस्य च इमम् अद्भुतम्
रोम-हर्षणम् संवादम् अश्रौषम् ।

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ १८-७५ ॥

व्यास-प्रसादात् श्रुतवान् एतत् गुह्यम् अहम् परम् ।
योगम् योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयम् ॥ १८-७५ ॥

व्यास-प्रसादात् स्वयम् योगम् कथयतः योगेश्वरात् कृष्णात्
एतत् परम् गुह्यम् अहम् साक्षात् श्रुतवान् ।

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ १८-७६ ॥

राजन् संस्मृत्य संस्मृत्य संवादम् इमम् अद्भुतम् ।
केशव-अर्जुनयोः पुण्यम् हृष्यामि च मुहुः मुहुः ॥ १८-७६ ॥

हे राजन्! ( अहं) केशव-अर्जुनयोः इमम् पुण्यम् अद्भुतम्
च संवादम् संस्मृत्य संस्मृत्य मुहुः मुहुः हृष्यामि ।

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन्हृष्यामि च पुनः पुनः ॥ १८-७७ ॥

तत् च संस्मृत्य संस्मृत्य रूपम् अति-अद्भुतम् हरेः ।
विस्मयः मे महान् राजन् हृष्यामि च पुनः पुनः ॥ १८-७७ ॥

हे राजन्! हरेः तत् च अति-अद्भुतम् रूपम् संस्मृत्य
संस्मृत्य मे महान् विस्मयः ( भवति) , ( अहं) पुनः पुनः हृष्यामि च ।

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ १८-७८ ॥

यत्र योगेश्वरः कृष्णः यत्र पार्थः धनुर्धरः ।
तत्र श्रीः विजयः भूतिः ध्रुवा नीतिः मतिः मम ॥ १८-७८ ॥

यत्र योगेश्वरः कृष्णः यत्र धनुर्धरः पार्थः,
तत्र श्रीः, विजयः, भूतिः, ध्रुवा नीतिः ( च इति)
मम मतिः ( अस्ति) ।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
मोक्षसंन्यासयोगो नाम अष्टादशोऽध्यायः ॥ १८ ॥

ॐ तत् सत् इति श्रीमत् भगवत् गीतासु उपनिषत्सु
ब्रह्म-विद्यायाम् योग-शास्त्रे श्रीकृष्ण-अर्जुन-संवादे
मोक्ष-संन्यास-योगः नाम अष्टादशः अध्यायः ॥ १८ ॥

anvaya formulated and
retyped by Sunder Hattangadi sunderh at hotmail.com

---

Please send corrections to sanskrit@cheerful.com
Last updated July 4, 2008